## अस्मदीयं कथनम्

विद्यालयस्तरीयशिक्षामुद्देश्यप्रधानां व्यावहारिकीं सामयिकीं वृत्तिदायिनीं च विधातुं समये समये पाठ्यक्रम-पाठ्यपुस्तकविकास-परिमार्जनानुकूलनकार्याणि निरन्तरं सञ्चाल्यमानानि सन्ति । विद्यार्थिषु राष्ट्रराष्ट्रियते प्रति सम्मानभावनामुद्भाव्य नैतिकानुशासन-स्वावलम्बनादि-सामाजिक-चारित्रिक-गुणानामाधारभूत-भाषिकशिल्पस्य विकासपूर्वकं सहयोगात्मकस्य दायित्वपूर्णस्य चाऽऽचरणस्य विकासोऽप्यत्वे आवश्यको दृश्यते । अस्या एवावश्यकतायाः परिपूर्तये शिक्षासम्बद्धैर्महानुभावैः सम्मिलितानां गोष्ठीनामन्तःक्रियायाश्च निष्कर्षेण निर्मितं २०७८ तमस्य वैक्रमाब्दस्य पाठ्यक्रममनुसृत्य पुस्तकमिदं निर्मितं वर्तते । शिक्षा विद्यार्थिषु वर्तमानस्य ज्ञानपक्षस्यान्वेषणं विधाय शिक्षणशिल्पेन जीवनस्य सम्बन्धं स्थापयति । शिक्षया विद्यार्थिषु स्वाधिकारस्य,स्वतन्त्रतायाः,समानतायाश्च प्रवर्धनाय,स्वस्थजीवनस्याभ्यासाय,तार्किकविश्लेषणेन निर्णयाय, वैज्ञानिकविश्लेषणेन व्यक्ति-समाज-राष्ट्राणां सबलविकासाय चाग्रेसरणशीलं सामर्थ्यं विकसनीयम् । एवं व्यक्तेः नैतिकाचरणप्रदर्शनाय, सामाजिकसद्भावप्रवर्धनाय, पर्यावरणस्य समुचितप्रयोगशिक्षणाय, दृढशान्तौ प्रतिबद्धतायै च शिक्षायाः आवश्यकता समाजे अवलोक्यते । तेन समाजसापेक्षतया ज्ञान-शिल्प-सूचना-सञ्चार-प्रविधीनां प्रयोगसमर्थाः, स्वावलम्बिनः, व्यावसायिकशिल्पाभ्यासनिरताः, राष्ट्रं राष्ट्रियतां राष्ट्रियादर्शं च प्रति सम्मानविधायकाः, समाज-स्वीकार्याः, सदाचरणशीलाः, स्वसंस्कृति-संस्कारपालनपराः, परसंस्कृत्यादिषु सहिष्णवश्च नागरिकाः शिक्षया निर्मातव्याः । एवं कल्पनाशीलानां रचनाशिल्पिनाम्, नैरन्तरिकपरिश्रमेणोद्यमशीलानाम्, विचारे उदात्तानाम्, व्यवहारे आदर्शमयानाम्, सामयिकसमस्यानां व्यवस्थापने साफल्याधायकानाम्, स्वावलम्बिनाम्, देशभक्तानाम्, परिवर्तनोद्यतानाम्, चिन्तनशीलानाम्, समावेशिसमाजनिर्माणे योगदानं करिष्यमाणानां च नागरिकाणां निर्माणं शिक्षया विधातव्यमिति समाजस्यापेक्षा दृश्यते । इमानेव पक्षान् विचार्य 'राष्ट्रिय-पाठ्यक्रम-प्रारूप, २०७६' इत्यनुसारेण निर्मितस्य कर्मकाण्डविषयकपाठ्यक्रमस्याधारेण षष्ठ्याः कक्षायाः पाठ्यपुस्तकमिदं विकसितं वर्तते ।

सर्वप्रथमं डा. ऋषिराम-पोखरेलः, केशवः अधिकारी, शम्भुप्रसाद-दाहालः, हरि-गौतमप्रभृतीनां महानुभावानां कार्यदलेन लिखितमिदं पुस्तकं डा. रुद्रप्रसादः मिश्र, शिवप्रसादः घिमिरे, अशोकः पौडेल, पुरुषोत्तमः घिमिरे- प्रभृतीनां महानुभावानां कार्यदलेन परिमार्जितं सम्पादितञ्चास्ति । अस्य पाठ्यपुस्तकस्य विकासे पाठ्यक्रमसिद्धान्तसंरचनयोः नवीनतमधारणामनुसृत्य परम्परागतानां शिल्पानामनुसरणं कृतमस्ति । अस्मिन् कार्ये अस्य केन्द्रस्य महानिर्देशकः अणप्रसादः न्यौपाने, डा. ऋषिरामः रेग्मी, डा. पुरुषोत्तमः भट्टराई, मनोजः घिमिरे, टुकराजः अधिकारी-प्रभृतीनां महानुभावानां विशेषसहयोगो विद्यते । अस्य चित्राङ्कनं टङ्कणं रूपसज्जा चेत्यादिकं खडोससुनुवार इत्याख्येन महानुभावेन कृतमस्ति ।

पाठ्यपुस्तकं शिक्षणप्रक्रियाया महत्त्वपूर्णसाधनं भवतीति नाविदितं शेमुषीमताम् । सानुभवाः

शिक्षकाः, जिज्ञासवश्छात्राः, सविधिकर्मकराश्च पाठ्यक्रमलक्ष्यीकृतान् विषयान् नैकविधस्रोतसां साधनानाञ्चोपभोगेन अध्यापयितुमध्येतुं कर्म कर्तुं च प्रभवन्ति। अनेकैः कारणैः सर्वेष्वेव विद्यालयेषु सरलतया पाठ्योपकरणानामुपलब्धेरभावाद् अध्ययनकार्यं केवलं पाठ्यपुस्तकाश्रितं भवतीति तथ्यमात्मसात्कृत्य प्रस्तुतमिदं पाठ्यपुस्तकं यथासम्भवं स्तरयुतं विधातुं प्रयासो विहितः, तथापि पाठ्यपुस्तकेऽस्मिन् यत्र यत्र त्रुटयोऽल्पताश्च विदुषां दृष्टिपथमागच्छेयुस्तत्र तत्र परिष्कारे परिवर्धने च दृग्गोचरीभूतानां त्रुटीनां परिमार्जनादिकार्यजाताय परामर्शप्रदानविधौ शिक्षकच्छात्राभिभावकपाठकविशेषज्ञानां महती प्रभावकारिणी भूमिका भवति । अत उक्तविषयेषु रचनात्मकपरामर्शदानेनोपकर्तुं पाठ्यक्रमविकासकेन्द्रमिदं तांस्तान् सर्वानेव महानुभावान् सप्रश्रयमभ्यर्थयते ।

नेपालसर्वकारः
शिक्षाविज्ञानप्रविधिमन्त्रालयः
पाठ्यक्रमविकासकेन्द्रम्

## विषयसूची

# शिक्षकलाई निर्देशन

१. रुद्राभिषेकलगायत यस पुस्तकमा उल्लेख भएका अन्य विधिमा समेत उल्लेख भएअनुसार शिक्षकले विद्यार्थीलाई प्रयोगात्मक सिकाइ गर्ने अवसर दिनुहोस् ।

२. प्रयोगात्मक सिकाइको अवसर दिँदा सम्भव भएसम्म कक्षामा नै रुद्राभिषेकादिलाई आवश्यक वस्तुहरू जम्मा गरी विद्यार्थीले आफैँ प्रयोग गर्न सक्ने गरी सारा अङ्गकर्म (पुण्याहवाचन, दीप, गणेशपूजा, कलश, रक्षाबन्धनपूजा र उत्तराङ्गकर्म) प्रधानकर्म र शिवजीको पञ्चामृतले स्नानलगायत अन्य कर्म गरेर बुझाइदिने अथवा शिवजीको मन्दिरमा वा अन्य कसैका घरमा रुद्राभिषेक भइरहेको ठाउँमा लगी प्रयोग गरे गराएको देखाई बुझाइदिनुहोस् ।

३. पाठ्यपुस्तकमा सम्मिलित कर्मकाण्ड सम्बद्ध अन्य विधिमा समेत यथासम्भव कर्म हुने स्थानमा लगी अवलोकन गर्ने, सम्बन्धित कार्यमा सहयोग गर्ने र नेतृत्व लिई कार्य सम्पादन गर्ने अवसर प्रदान गर्नुहोस् ।

४. मन्त्र सम्बद्ध विषयवस्तु वा पाठको शिक्षण गर्दा उदात्तादि सारस्वर र ह्रस्वदीर्घप्लुतोच्चारण राम्ररी शुद्धसँग सिकाउनुहोस् । यस क्रममा विद्यार्थीलाई पाटीमा लेखाउने प्रयोगको स्लाइड देखाउने, रेकर्ड सुनाउने पनि गर्नुहोस् ।

५. विद्युतीय सञ्चारका साधनमा उपलब्ध सामग्री, विकसित श्रव्य, दृश्य वा श्रव्यदृश्य सामग्रीको उपयोग गरी कक्षाकोठाको सिकाइलाई जीवन्त बनाउनुहोस् ।

६. निर्धारित विषयवस्तुमा आधारित क्रियात्मक अभ्यास गराउँदा ब्राह्मणलाई कर्ताका रूपमा ग्रहण गर्नुहोस् र सबैलाई क्रियात्मक अभ्यास गर्ने तथा गराउने अवसर प्रदान गर्नुहोस् ।

# प्रातर्जागरणम्



मङ्गलाचरणम्

**लम्बोदरं परमसुन्दरमेकदन्तं**

**रक्ताम्बरं त्रिनयनं परमं पवित्रम् ।**

**उद्यद्दिवाकरनिभोज्ज्वलकान्तिकान्तं**

**विघ्नेश्वरं सकलविघ्नहरं नमामि ॥**

## परिचय

कुनै पनि संस्कार निश्चित नियमभित्र बाँधिएको हुन्छ, जुन व्यक्ति नियमभित्र बस्दछ, त्यस व्यक्तिको आज अर्थात् वर्तमान अत्यन्त शान्त र सुन्दर बन्दछ । यसरी वर्तमानलाई सुन्दर बनाउने हो भने समग्र जीवन सुन्दर बन्दछ । यस किसिमले आफ्नो जीवन अत्यन्त शान्त, सुन्दर र सुव्यवस्थित बनाउन हामी निश्चित नियमभित्र बस्नुपर्दछ ।

मानिसको जीवन सुन्दर बनाउनका लागि यहाँ केही शास्त्रीय नियम यहाँ बताइएका छन् । हामीले यति मात्र गर्ने सङ्कल्प गऱ्यौं भने पनि हाम्रो जीवन अवश्य नै शान्त, सुखी र सुन्दर हुन्छ ।

(अ) नित्याचाराः

**सन्ध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम् ।**

**वैश्वदेवातिथेयञ्च षट्कर्माणि दिने दिने ॥**

- पराशरः

**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥**

- गीता ३।३५

(आ) प्रातरुत्थानकालः

**ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।**
**कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥**

- मनुस्मृतिः

(इ) करावलोकनम्

प्रातरुत्थानानन्तरं स्वकरावलोकनम् -

**ॐ कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती ।**
**करमूले स्थितो ब्रह्मा प्रभाते करदर्शनम् ॥**

- आचारप्रदीपः

(ई) भूमिवन्दना

**ॐ समुद्रवसने देवि पर्वतस्तनमण्डिते ।**
**विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥**

- मदनपारिजातः

(उ) मङ्गलवस्तुदर्शनम्[1]

**रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् ॥**
**गुरुमग्निं रविं पश्येन्नमस्येत् प्रातरेव हि ॥**

- कात्यायनः

॥ इति ॥

---

१. **श्रोत्रियं सुभगां गां च अग्निमग्निचितं तथा ।**
**प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥** – नागदेवः

## शब्दार्थाः

| | |
|---|---|
| नित्याचारः | = सधैँ गर्नुपर्ने कर्म |
| करावलोकनम् | = हात हेर्नु |
| भूमिवन्दना | = पृथ्वीको प्रार्थना |
| मङ्गलवस्तुदर्शनम् | = माङ्गलिक वस्तुको दर्शन गर्नु |
| जपः | = मनमनमा कुनै मन्त्रलाई बारम्बार दोहोऱ्याउनु |
| सन्ध्या | = प्रातः, मध्याह्न र सायङ्कालमा गरिने गायत्रीको उपासना |
| स्नानम् | = सम्पूर्ण शरीरलाई जल आदिद्वारा विधिपूर्वक नुहाउनु |
| होमः | = विधिपूर्वक देवतालाई आहुति दिनु |
| स्वाध्यायः | = आआफ्नो परम्पराअनुसार वेदादि विद्या पढ्नु |
| देवतार्चनम् | = देवताको पूजा |
| वैश्वदेवम् | = भोजन गर्नुअघि सबै देवतालाई हवन आदि गरिने कार्य |
| आतिथेयम् | = अतिथिसत्कार |
| दिने दिने | = प्रतिदिन |
| रोचनम् | = गोरोचन |
| हेम | = सुन, सुवर्ण |
| मृदङ्गम् | = वाद्यविशेष |
| पर्वतस्तनमण्डिते | = पर्वतरूपी स्तनद्वारा सुशोभित भएकी (पृथ्वी) |
| समुद्रवसने | = समुद्ररूपी वस्त्र लगाएकी (पृथ्वी) |
| क्षमस्व | = क्षमा गर्नुहोस् |
| गुरुम् | = अज्ञानलाई हटाएर ज्ञान दिने व्यक्तिलाई |

## अभ्यासः

### १. अधोलिखितानां प्रश्नानाम् उत्तरं वदत लिखत च

(क) किं किं कर्म प्रतिदिनं क्रियते ?

(ख) स्वकरावलोकनमन्त्रः कः ?

(ग) भूमिवन्दना का ?

(घ) माङ्गलिकवस्तूनि कानि ?

(ङ) प्रातः कदा बुध्येत ?

### २. शिक्षकसहयोगेन शब्दान् पृथक्कुरुत

**उदाहरणम्-** लम्बोदरम् = लम्ब + उदरम्

रक्ताम्बरम् =

देवतार्चनम् =

वैश्वदेवातिथेयञ्च =

धर्मार्थौ =

चानुचिन्तयेत् =

पश्येन्नमस्येत् =

### ३. रिक्तस्थानं पूरयत

(क) सन्ध्या स्नानं ------------------------------------ दिने दिने ।

(ख) कराग्रे वसते ------------------------------------ करदर्शनम् ।

(ग) रोचनं चन्दनं ------------------------------------ प्रातरेव हि ॥

# शौचाचारः

## (अ) शौचावश्यकता

**शौचे यत्नः सदा कार्यः शौचमूलो यतो द्विजः ।**
**शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥**

- दक्षस्मृतिः

## (आ) शौचविधिः

सङ्क्षिप्तशौचविधिः

**दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्रमुदङ्मुखः ।**
**कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥**

- याज्ञवल्क्यस्मृतिः

**मूत्रे तु दक्षिणे कर्णे पुरीषे वामकर्णके ।**
**उपवीतं सदा धार्यं मैथुने तूपवीतिवत् ॥**

- आह्निकम्

**अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ।**
**वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः ॥**

- देवीभागवतम्

इति शौचं कृत्वा

## (इ) मृत्तिकालेपनम्

**एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश ।**
**उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥**

- मनुस्मृतिः ५.१३६

इति मृत्तिकालेपनपूर्वकं प्रक्षालनं कुर्यात् ।

(ई) **गण्डूषविधिः**

सङ्क्षिप्तगण्डूषविधिः

**कुर्याद् द्वादश गण्डूषान् पुरीषोत्सर्जने ततः ।**

**मूत्रोत्सर्गे च चतुरो भोजनान्ते तु षोडश ॥**

**भक्ष्यभोज्यावसाने तु गण्डूषाष्टकमाचरेत् ॥** - आश्वलायनः

(उ) **दन्तधावनविधिः**[1]

दन्तधावनावश्यकता -

**मुखे पर्युषितं नित्यं भवत्यप्रयतो नरः ।**

**दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा ॥** - अत्रिः

दन्तधावने वनस्पतिप्रार्थना

**आयुर्बलं यशो वर्चः प्रजापशुवसूनि च ॥**

**ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥** - विश्वामित्रकल्पः

ततो दन्तधावनम्

**ॐ अन्नाद्याय व्यूहध्वꣳसोमो राजाऽयमागमत् ।**

**स मे मुखं प्रमाक्ष्यते यशसा च भगेन च ॥**

इति मन्त्रेण यत्नेन शुद्ध्यर्थं दन्तान् धावयेत् ॥

(ऊ) **मौनधारणम्**

**सन्ध्ययोरुभयोर्जाप्ये भोजने दन्तधावने ।**

**पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥**

**गुरूणां सन्निधौ दाने योगे चैव विशेषतः ।**

**एतेषु मौनमातिष्ठन्स्वर्गं प्राप्नोति मानवः ॥** - अङ्गिराः

**॥ इति शौचाचारः ॥**

---

१. चतुर्दश्यष्टमी दर्शः पूर्णिमा सङ्क्रमो रवेः ।
श्राद्धे जन्मदिने चैव विवाहेऽजीर्णदोषतः ।
व्रते चैवोपवासे च वर्जयेद् दन्तधावनम् ॥

## शब्दार्थाः

| | |
|---|---|
| शौचविधिः | = पवित्र हुने विधि |
| यत्नः | = प्रयत्न |
| निष्फलाः | = फल प्राप्त नहुने |
| कर्णस्थः | = कानमा रहेको, कानमा राखिएको |
| ब्रह्मसूत्रम् | = यज्ञोपवीत वा जनै |
| उदङ्मुखः | = उत्तरतिर मुख गरेर |
| मूत्रम् | = लघुशङ्का (पिसाब) |
| पुरीषम् | = दीर्घशङ्का (दिसा) |
| उपवीतम् | = जनै |
| अन्तर्धाय | = ढाकेर |
| तृणैः | = घाँस वा पराल आदिले |
| प्रावृत्य | = छोपेर |
| वाससा | = कपडाले |
| वाचं नियम्य | = नबोलीकन |
| ष्ठीवनम् | = थुक्नु |
| उच्छ्वासवर्जितः | = लामो सास ननिकालीकन (सास नफेरीकन) |
| मृत्तिकालेपनम् | = माटो लगाएर (माटो लगाएर धुनु वा शुद्ध हुनु) |
| उभयोः | = दुवै हातमा |
| शुद्धिमभीप्सता | = पवित्र हुन चाहने व्यक्तिले |
| गण्डूषविधिः | = कुल्ला गर्ने विधि |
| भक्ष्यभोज्यावसाने | = अल्पाहार (खाजा/नास्ता) को अन्त्यमा |
| मौनधारणम् | = नबोल्नु |

## अभ्यासः

१. अधोलिखितानां प्रश्नानाम् उत्तरं वदत लिखत च

(क) शौचावश्यकता का ?

(ख) शौचविधिः कः ?

(ग) मृत्तिकालेपनप्रकारः कः ?

(घ) गण्डूषविधिः कः ?

(ङ) कस्यां कस्याम् अवस्थायां मौनधारणं भवति ?

(च) दन्तधावने वनस्पतिप्रार्थनाया मन्त्रः कः ?

(छ) भक्ष्यभोज्यावसाने कति गण्डूषमाचरेत् ?

(ज) मौनमास्थितः मानवः कीदृशं फलं प्राप्नोति ?

(झ) दन्तधावनमन्त्रः कः ?

२. बहुवारं पठत

| | | |
|---|---|---|
| चेद्दक्षिणामुखः | = | चेद् + दक्षिणामुखः |
| तूपवीतिवत् | = | तु + उपवीतिवत् |
| ष्ठीवनोच्छ्वासवर्जितः | = | ष्ठीवन + उच्छ्वासवर्जितः |
| पुरीषोत्सर्जने | = | पुरीष + उत्सर्जने |
| भोजनान्ते | = | भोजन + अन्ते |
| जिह्वोल्लेखनिका | = | जिह्वा + उल्लेखनिका |
| भवत्यप्रयतः | = | भवति + अप्रयतः |

३. परस्परं मेलयत

| | |
|---|---|
| मूत्रोत्सर्जने यज्ञोपवीतम्, | उदङ्मुखः कार्यः । |
| पुरीषोत्सर्जने यज्ञोपवीतम्, | दक्षिणकर्णे भवति । |
| दिवा मूत्रपुरीषोत्सर्जने | दक्षिणामुखः कार्यः । |
| रात्रौ मूत्रपुरीषोत्सर्जने | वामकर्णे भवति । |
| | पश्चिममुखः कार्यः । |

# प्रातः स्तुतिः

## परिचय

प्रातःकालमा उठेर शौचाचार सकेपछि प्रातःस्मरणीय देवीदेवताहरूको स्तुति गर्नाले पुरै दिन उत्तम रूपले बित्छ । दुःस्वप्न, कलिदोष, शत्रुताप, पाप र संसारको भय क्रमशः नाश हुन्छ । विषको भय हुँदैन । धर्मको वृद्धि हुन्छ । अज्ञानीलाई ज्ञान प्राप्त हुन्छ । रोगबाट छुटकारा पाइन्छ । दीर्घ आयु मिल्छ । विजय प्राप्त हुन्छ । निर्धन धनी हुनुका साथै सम्पूर्ण बाधाबाट छुट्कारा मिल्छ । तसर्थ यहाँ सङ्क्षेपले प्रातःस्तुति दिइएको छ । साथै निष्कामनापूर्वक पाठ गर्नेलाई भगवान्‌को भक्ति प्राप्त हुन्छ । त्यसैले हामीहरूले प्रतिदिन कम्तीमा निम्नानुसारका स्तुति गर्नु ज्यादै कल्याणकारी हुन्छ ।

(क) गणेशस्तुतिः

**प्रातः स्मरामि गणनाथमनाथबन्धुं,**
**सिन्दूरपूरपरिशोभितगण्डयुग्मम् ।**
**उद्दण्डविघ्नपरिखण्डनचण्डदण्डम्**
**आखण्डलादिसुरनायकवृन्दवन्द्यम् ॥**

(ख) विष्णुस्तुतिः

**प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै,**
**नारायणं गरुडवाहनमब्जनाभम् ।**
**ग्राहाभिभूतवरवारणमुक्तिहेतुं,**
**चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥**

(ग) शिवस्तुतिः

**प्रातः स्मरामि भवभीतिहरं सुरेशं,**
**गङ्गाधरं वृषभवाहनमम्बिकेशम् ।**
**खट्वाङ्गशूलवरदाभयहस्तमीशं,**
**संसाररोगहरमौषधमद्वितीयम् ॥**

(घ) सूर्यस्तुतिः

प्रातः स्मरामि खलु तत्सवितुर्वरेण्यं
रूपं हि मण्डलमृचोऽथ तनुर्यजूंषि ।
सामानि यस्य किरणाः प्रभावादिहेतुं
ब्रह्माहरात्मकमलक्ष्यमचिन्त्यरूपम् ॥

(ङ) देवीस्तुतिः

प्रातः स्मरामि शरदिन्दुकरोज्ज्वलाभां
सद्रत्नवन्मकरकुण्डलहारभूषाम् ।
दिव्यायुधोर्जितसुनीलसहस्रहस्तां
रक्तोत्पलाभचरणां भवतीं परेशाम् ॥

(च) नवग्रहस्तुतिः

ब्रह्मा मुरारिस्त्रिपुरान्तकारी
भानुः शशी भूमिसूतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

-मार्कण्डेयस्मृतिः

(छ) ऋषिस्तुतिः

भृगुर्वसिष्ठः क्रतुरङ्गिराश्च
मनुः पुलस्त्यः पुलहश्च गौतमः ।
रैभ्यो मरीचिश्च्यवनश्च दक्षः
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

- वामनपुराणम्

सनत्कुमारः सनकः सनन्दनः सनातनोऽप्यासुरिपिङ्गलौ च ।
सप्त स्वराः सप्त रसातलानि कुर्वन्तु सर्वे मम सुप्रभातम् ॥
सप्तार्णवाः सप्त कुलाचलाश्च सप्तर्षयो द्वीपवनानि सप्त ।
भूरादिकृत्वा भुवनानि सप्त कुर्वन्तु सर्वे मम सुप्रभातम् ॥

- वामनपुराणम्

(ज) प्रकृतिस्मरणम्

पृथ्वी सगन्धा सरसास्तथापः
स्पर्शी च वायुर्ज्वलितं च तेजः ।
नभः सशब्दं महता सहैव
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

- वामनपुराणम्

(झ) पुण्यश्लोकाः

पुण्यश्लोको नलो राजा पुण्यश्लोको जनार्दनः ॥
पुण्यश्लोका च वैदेही पुण्यश्लोको युधिष्ठिरः ॥
अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥

- पद्मपुराणम्

सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद् वर्षशतं साग्रमपमृत्युविवर्जितः ॥

- आचारेन्दुः

कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥

- मार्कण्डेयस्मृतिः

प्रह्लादनारदपराशरपुण्डरीकव्यासाम्बरीषशुकशौनकभीष्मदाल्भ्यान्,

रुक्माङ्गदार्जुनवसिष्ठविभीषणादीन् पुण्यानिमान् परमभागवतान् नमामि ॥
धर्मो विवर्धति युधिष्ठिरकीर्तनेन पापं प्रणश्यति वृकोदरकीर्तनेन ।
शत्रुर्विनश्यति धनञ्जयकीर्तनेन माद्रीसुतौ कथयतां न भवन्ति रोगाः ॥

- पद्मपुराणम्

इत्थं प्रभाते परमं पवित्रं पठेत् स्मरेद्वा शृणुयाच्च भक्त्या ।
दुःस्वप्ननाशस्त्विह सुप्रभातं भवेच्च नित्यं भगवत्प्रसादात् ॥

- वामनपुराणम्

॥ इति ॥

## शब्दार्थाः

| | |
|---|---|
| गणेशस्तुतिः | = गणेशको प्रार्थना |
| नवग्रहस्तुतिः | = सूर्यादि नवग्रहको प्रार्थना |
| भानुः | = सूर्य |
| शशी | = चन्द्रमा |
| भूमिसुतः | = मङ्गल |
| गुरुः | = बृहस्पति |
| मुरारिः | = विष्णु |
| त्रिपुरान्तकारी | = त्रिपुरलाई नाश गर्ने (शिवजी) |
| प्रकृतिस्मरणम् | = प्रकृतिस्तुति |
| स्मरेत् | = सम्झना गरोस् |
| शृणुयात् | = सुनोस् |
| भक्त्या | = भक्तिपूर्वक |
| भगवत्प्रसादात् | = भगवान्को प्रसादबाट |

## अभ्यासः

### १. अधोलिखितप्रश्नानाम् उत्तराणि वदत लिखत च

(क) विष्णुस्तुतिश्लोकः कः ?

(ख) सूर्यस्तुतिश्लोकः कः ?

(ग) नवग्रहस्तुतिः का ?

(घ) नवग्रहाः के ? नामानि लिखत ।

(ङ) ऋषिस्तुतिश्लोकं लिखत ।

(च) ऋषिस्तुतौ केषां केषामृषीणां नामानि सङ्गृहीतानि सन्ति ?

(छ) प्रकृतिस्मरणे के पदार्थाः समायाताः सन्ति ?

(ज) के च पुण्यश्लोकाः ?

(झ) प्रातःस्तुतिपठनस्मरणादिना किं फलं प्राप्यते ?

### २. पुनर्लेखनं कुरुत

सनत्कुमारः, सनकः, सनन्दनः, सनातनः, आसुरिः, पिङ्गलः

### ३. रिक्तस्थानं पूरयत

प्रातःस्मरामि गणनाथ ----------------,

सिन्दूर ------------ शोभित ------------ युग्मम् ।

उद्दण्ड ------------ परिखण्डन ------------ दण्डम्,

आखण्ड ----------------- वृन्दवन्द्यम् ॥

प्रातः स्मरामि भव ----------------- सुरेशं,

------------ वृषभ ------------ मम्बिकेशम् ।

खट्वाङ्ग --------------- भय ---------------,

------------ रोगहरं ------------ मद्धितीयम् ।

# स्नानम्

## परिचय

प्रातः कालमा स्नान गर्नाले मानिस शुद्ध हुनुका साथै जप, पूजा, पाठलगायत सम्पूर्ण कर्मका लागि योग्य बन्छ । शरीरमा स्फूर्ति बढ्छ । स्नानको प्रशंसा सर्वत्र पाइन्छ ।

नौ ढोका भएको अत्यन्त मलिन पाञ्चभौतिक शरीरबाट दिनरात अशुद्ध वस्तु निस्किन्छन् । शुद्ध तीर्थमा प्रातः स्नान गर्नाले यो अपवित्र शरीर शुद्ध हुनुका साथै रूप, तेज, बल, पवित्रता, आयुः, आरोग्य, निर्लोभता, दुःस्वप्नको नाश, तप र मेधा आदि गुण क्रमशः प्राप्त हुँदै जान्छन् ।

**(क) स्नानभेदाः**

स्नानभेदाः सप्त सन्ति । ते यथा -

**"मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च ।**

**वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ॥"**

- याज्ञवल्क्यः

अर्थात् (आपोहिष्ठा) इत्यादि मन्त्रले सेचन गर्नु मन्त्रस्नान, सम्पूर्ण शरीरमा माटो लगाउनु भौमस्नान, कटि (कम्मर) भन्दा माथि भस्म लगाउनु अग्निस्नान, हावामा खुला शरीर राख्नु वायुस्नान, घामपानी भएको बेलामा परेकै पानीले स्नान गर्नु दिव्यस्नान, पानीमा डुबुल्की मार्नु वरुणस्नान र आत्मचिन्तन गर्नु मानस स्नान आदि स्नानमध्ये पानीमा डुबुल्की मार्नु सर्वश्रेष्ठ स्नान हो ।

स्नान सकेर स्नानाङ्ग तर्पण गरी बोट, बिरुवा वा लहरामाथि आफ्नो शिखा मन्त्रपूर्वक निचोर्नुपर्छ । प्रातः स्नानका अतिरिक्त मध्याह्न र सायं स्नान पनि आआफ्नो परम्पराअनुसार गर्नुपर्छ ।

(ख) **स्नानविधिः**

सङ्कल्पः

नद्यादौ, तडागे, कूपे वा सम्प्राप्य शुचौ देशे वस्त्रादिकं संस्थाप्य हस्तौ पादौ प्रक्षाल्य बद्धशिखी यज्ञोपवीत्याचम्य प्रवाहाभिमुखः प्राङ्मुखो वा कुशोपग्रहः कुशादिकमादाय सङ्कल्पं कुर्यात् -

हरिः ॐ तत्सत् ३, ॐ विष्णुः ३ अद्येह श्रीमद्भगवतो महापुराणपुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकलजगतः सृष्टिकारिणो ब्रह्मणो द्वितीये परार्धे श्रीश्वेतवाराहकल्पे प्रह्लादाधिपत्ये मनौ सप्तमे वैवस्वतमन्वन्तरे सत्यत्रेताद्वापरान्ते बौद्धावतारे अष्टाविंशतितमे कलियुगे तस्य प्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्ते गङ्गादेव्या उत्तरदिग्भागे हिमाचलस्य दक्षिणपार्श्वे नेपालदेशे पाशुपतक्षेत्रे पशुपतेः गुह्यकाल्याश्च ... ... दिग्भागे ... ... नगरे, ग्रामे वा इह पुण्यभूमौ षष्टिसंवत्सराणां मध्ये ...... नाम्नि संवत्सरे श्रीसूर्ये ...... अयने ...... ऋतौ ...... मासे ...... पक्षे ...... तिथौ ...... वासरे ...... राशिस्थिते श्रीसूर्ये ...... राशिस्थिते देवगुरौ ... ... राशिस्थिते चन्द्रमसि, अन्येषु शेषेषु ग्रहेषु यथा-यथं राशिस्थानस्थितेषु सत्सु एवं ग्रहगणविशेषेण विशिष्टान्वितायां शुभपुण्यतिथौ ...... गोत्रः ...... प्रवरः...... अहं श्रुतिस्मृतिपुराणोक्तफलप्राप्तिपूर्वकं श्रीपरमेश्वरप्रीत्यर्थं नित्यकर्माङ्गत्वेन प्रातः स्नानं करिष्ये ॥

इति सङ्कल्प्य तीर्थं प्रार्थयेत् ।

(ग) **तीर्थप्रार्थना**

**ॐ नमामि गङ्गे तव पादपङ्कजं सुरासुरैर्वन्दितदिव्यरूपम् ।**
**भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥**
**त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता ।**
**याचितं देहि मे तीर्थं तीर्थराज नमोऽस्तु ते ॥**
**गङ्गे च यमुने चैव गोदावरि सरस्वति ।**
**नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥**
**नन्दिनी नलिनी सीता मालती च महापगा ।**
**विष्णुपादाब्जसम्भूता गङ्गा त्रिपथगामिनी ॥**

भागीरथी भोगवती जाह्ववी त्रिदशेश्वरी ।
द्वादशैतानि नामानि यत्र यत्र जलाशये ॥
स्नानोद्यतः स्मरेन्नित्यं तत्र तत्र वसाम्यहम् ॥
सर्वाणि यानि तीर्थानि पापमोचनहेतवः ।
आयान्तु स्नानकालेऽस्मिन् क्षणं कुर्वन्तु सन्निधिम् ॥

॥ इति ॥

(घ) स्नानम्

तत्पश्चात् नाभिपरिमाणं तीर्थजलान्तः प्रविश्य सूर्याभिमुखो निमज्जेदापोऽअस्मानित्यादि मन्त्रेण -

ॐ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वꣳहि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूतऽएमि ॥
दीक्षातपसोस्तनूरसि तां त्वा शिवाꣳशग्मां परिदधे भद्रं वर्णं पुष्यन् ॥
ॐ आपो हि ष्ठा मयो भुवस्ता नऽऊर्जे दधातन । महे रणाय चक्षसे ॥
ॐ योवः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥
ॐ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ ॥
आपो जनयथा च नः ॥
ॐ पुनन्तुमा देवजनाः पुनन्तु मनसा धियः ।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥

इति स्नात्वा दशवारं गायत्रीं जप्त्वा आचम्य च

विष्णुध्यानम्

ॐ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं,
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं,
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

इति विष्णुं ध्यायेत् ।

## (ङ) हस्ततीर्थानि




**अर्थात्**

१. सर्वाङ्गुलीनामग्रभागः देवतीर्थम्

२. तर्जनीमूलभागः पितृतीर्थम्

३. मणिबन्धनिकटभागः ब्रह्मतीर्थम्

४. कनिष्ठिकामूलभागः कायतीर्थम्

५. हस्तमध्यभागः अग्नितीर्थम्

## (च) स्नानाङ्गतर्पणम्

स्नानं कृत्वा स्नानाङ्गतर्पणं कुर्यात् -

तत्रादौ ऋजुकुशोपग्रहः सचन्दनाक्षततुलसीपत्रं जलमर्घ्यपात्रेण अञ्जलिना वा देवतीर्थेनैकैकवारं देवान् तर्पयेत् -

**ॐ ब्रह्मादयो देवास्तृप्यन्ताम् । ॐ भूर्देवास्तृप्यन्ताम् ।**

**ॐ भुवर्देवास्तृप्यन्ताम् । ॐ स्वर्देवास्तृप्यन्ताम् ॥**

**ॐ भूर्भुवः स्वर्देवास्तृप्यन्ताम् ।**

अथ निवीती (कण्ठलम्बी) सन् कुशानुदगग्रान् कृत्वाऽऽचम्य चोदङ्मुखो भूत्वा कायतीर्थेन प्रतिमन्त्रं सयवजलेन द्विर्द्विर्ऋषींस्तर्पयेत् -

**ॐ सनकादिद्वैपायनान्ता ऋषयस्तृप्यन्ताम् ॥**

**ॐ भूर्ऋषयस्तृप्यन्ताम् । ॐ भुवर्ऋषयस्तृप्यन्ताम् ।**

**ॐ स्वर्ऋषयस्तृप्यन्ताम् । ॐ भूर्भुवः स्वर्ऋषयस्तृप्यन्ताम् ।**

ततः पितृतीर्थेन प्रतिमन्त्रं त्रिस्त्रिवारं दक्षिणामुखः प्राचीनावीती (अपसव्यम्) भूत्वा दक्षिणाग्रमूलान् कुशान् कृत्वा सतिलजलेन पितृन् तर्पयेत् -

**ॐ कव्यवाडनलादयः पितरस्तृप्यन्ताम् । ॐ भूः पितरस्तृप्यन्ताम् ।**

**ॐ भुवः पितरस्तृप्यन्ताम् । ॐ स्वः पितरस्तृप्यन्ताम् ।**

**ॐ भूर्भुवः स्वः पितरस्तृप्यन्ताम् ।**

ततः सव्यः सन् आचामेत् ।

ततः सतिलजलाञ्जलिमादाय -

**ॐ यन्मया दूषितं तोयं शारीरमलसम्भवैः ।**

**तस्य पापस्य शुद्धयर्थं यक्ष्मैतत्ते तिलोदकम् ॥**

इति तीर्थतटे उत्सृजेत् ।

ततः

**ॐ लतागुल्मेषु वृक्षेषु पितरो ये व्यवस्थिताः ।**

**ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः ॥**

इति वृक्षादौ दक्षिणभागे शिखां निष्पीडयेत् ।

तदनन्तरं शुद्धे वाससी परिधाय तिलकं कृत्वा परमात्मानं स्मरन् गृहमागच्छेत् ।

**॥ इति स्नानविधिः ॥**

**शब्दार्थाः**

तडागे = तलाउमा

कूपे = कुवामा

शुचौ देशे = पवित्र ठाउँमा

संस्थाप्य = राखेर

| | | |
|---|---|---|
| बद्धशिखी | = | शिखा बाँधेर |
| प्रवाहाभिमुखः | = | जलप्रवाहतिर फर्केर |
| कुशोपग्रहः | = | कुश लिएर (ब्रहमदण्ड वा पवित्र लिएर) |
| नाभिपरिमाणम् | = | आफ्नो नाभिसम्म जल भएको |
| ऋजुकुशः | = | सोझो कुश |
| तीर्थजलान्तः | = | तीर्थको जलभित्र |
| निमज्य | = | डुबुल्की मारेर |
| विष्णुध्यानम् | = | विष्णुको ध्यान |
| देवतीर्थेन | = | हातको औँलाको टुप्पातिरबाट |
| निवीती | = | माला लगाए झैँ जनै लगाएर |
| कायतीर्थेन | = | कान्छी औँलाको मूल भागबाट |
| पितृतीर्थेन | = | तर्जनी (चोरी) औँलाको फेदबाट |
| प्राचीनावीती | = | अपसव्य भएर |
| तीर्थतटे | = | नदी आदि तीर्थको किनारमा (तीरमा) |
| वृक्षादौ | = | वृक्ष, लता र गुल्ममा |
| दक्षिणभागे | = | दक्षिण भागमा |

## अभ्यासः

१. अधोलिखितानां प्रश्नानाम् उत्तरं वदत लिखत च

(क) स्नानसङ्कल्पवाक्यं लिखत ।

(ख) “आपोऽअस्मान्मातरः” इति मन्त्रं पूरयत ।

(ग) विष्णोर्ध्यानं लिखत ।

(घ) शिखानिष्पीडनमन्त्रः कः ?

(ङ) स्नानभेदाः कति ? के च ते ?

(च) स्नानकर्ता कुत्र गत्वा कथं स्नानं करोति ?

(छ) तीर्थप्रार्थनायां पठितान् श्लोकान् कण्ठस्थं भणत ।

(ज) स्नानमन्त्राः के ?

(झ) हस्ते कति तीर्थाः प्रदर्शिताः ?

(ञ) देवतीर्थेन कस्मै तर्पणं दीयते ?

(ट) उदङ्मुखः निवीती कर्ता केन तीर्थेन केभ्यः तर्पणं ददाति ?

(ठ) पितृतर्पणं केन तीर्थेन कथं क्रियते ?

(ड) निम्नचित्रे यथास्थानं तीर्थनामानि लिखत



## २. रिक्तस्थाने समीचीनशब्दं प्रयुज्य वाक्यपूर्णं कुरुत

(क) ऋषीणां तर्पणं ------------ विधीयते ।

(देवतीर्थेन, कायतीर्थेन, ब्रह्मतीर्थेन, अग्नितीर्थेन)

(ख) कर्ता ------------ सन् आचामेत् (अपसव्यः, सव्यः, निवीती, प्राचीनावीती)

(ग) वृक्षादौ ------------ भागे शिखां निष्पीडयेत् । (उत्तर, दक्षिण, पश्चिम, पूर्व)

(घ) कायतीर्थेन ------------ तर्पयेत् । (एकैकं, त्रिस्त्रिवारं, द्विर्द्विः चतुश्चतुर्वारम्)

## परिचय

**विप्रो वृक्षस्तस्य मूलं च सन्ध्या वेदः शाखा धर्मकर्माणि पत्रम् ।**

**तस्मान्मूलं यत्नतो रक्षणीयं छिन्ने मूले नैव शाखा न पत्रम् ।**

- विश्वामित्रकल्पः

अर्थात् विप्र वृक्ष हो भने त्यस वृक्षको फेद सन्ध्या हो । वेदहरू त्यसका हाँगा हुन् । धर्मकर्महरू त्यसका पात हुन् । त्यसकारण मूलरूपी सन्ध्यालाई प्रयत्नपूर्वक रक्षा गर्नुपर्दछ किनभने मूल नभए त्यसका शाखाहरू र पातहरू पनि हुँदैनन् । तसर्थ रुख नै नभएपछि फलको आशा कसरी गर्ने ?

बिहान, मध्याह्न र बेलुका सन्ध्याको समयमा सूर्यमण्डलमा क्रमशः ब्रह्मा, रुद्र र विष्णु स्वरूपिणी गायत्रीको ध्यान गरेर गायत्री मन्त्र विधिपूर्वक जप्नुलाई सन्ध्याविधि भनिन्छ । उपनयन संस्कार भएका द्विजातिले अनिवार्य रूपमा शास्त्रले तोकेको समयमा सन्ध्योपासन गर्नुपर्छ । द्विजातिमा पनि ब्राह्मणको बल, पुरुषार्थ, धनसम्पत्ति, ब्राह्मणत्व जे भने पनि गायत्री नै हो । ब्राह्मण भएर गायत्रीको महत्त्व बुझ्दैन, सन्ध्या गर्दैन भने त्यो ब्राह्मण हुन सक्दैन ।

सन्ध्योपासन नगर्ने द्विजातिले पूजा, पाठ, दान, यज्ञ जे गरे पनि त्यसको फल पाउँदैन । जसले गायत्रीमा श्रद्धा राखेर सन्ध्योपासन गर्ने गर्छ, त्यो द्विजाति महापापी नै भए पनि क्रमशः पापबाट मुक्त हुन्छ र फेरि पापकर्ममा प्रवृत्त हुँदैन ।

वैदिक सनातन परम्परामा त्रिकाल सन्ध्या गर्ने विधान छ -

**प्रातः सन्ध्यां सनक्षत्रां मध्याह्ने मध्यभास्कराम् ।**

**ससूर्यां पश्चिमां सन्ध्यां तिस्रः सन्ध्या उपासते ॥**

- देवीभागवतम्

अर्थात् तारा सहितको प्रातः सन्ध्या र सूर्यको मध्याह्न समयमा मध्याह्नसन्ध्या तथा सूर्य नअस्ताउँदै सायं सन्ध्या जसले गर्दछ, त्यो अति उत्तम मानिन्छ । साथै सङ्ख्यागत दृष्टिले हेर्दा १००८ पटक जप्नुलाई उत्तम जप, १०८ पटक जप्नुलाई मध्यम जप, १० पटक जप्नुलाई सामान्य जप भनिन्छ ।

बिहान स्नान, गायत्री जप नगरी खानुहुँदैन र सूर्यलाई अर्घ्य नदिई खाए पाप लाग्छ । सूर्यार्घ्य र सूर्योपस्थान पनि सन्ध्योपासनका प्रमुख अङ्ग हुन् । यसकारण सन्ध्योपासन गर्दा सूर्यार्घ्य र सूर्योपस्थान लगायत यहाँ उल्लेख गरिएका सबै विधि गर्नुपर्छ ।

**सन्ध्यासामग्री**

पूर्वः

उत्तरः

दक्षिणः

पश्चिमः

## अथ सामान्यसन्ध्याविधिः

### प्रतिज्ञासङ्कल्पः

पूर्वसङ्कल्पमुच्चार्य --------- शुभपुण्यतिथौ --------- गोत्रः --------- प्रवरः --------- अहं श्रुतिस्मृतिपुराणोक्तफलप्राप्तिपूर्वकं श्रीपरमेश्वरप्रीत्यर्थं नित्यकर्माङ्गत्वेन प्रातः (मध्याह्न / सायं) सन्ध्यां करिष्ये ॥

### (क) आसनशुद्धिः

ॐ पृथ्वीति मन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसने विनियोगः ।

**ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।**
**त्वं च धारय मां नित्यं पवित्रं कुरु चासनम् ॥**

### (ख) भस्मधारणम्

दक्षिणहस्तेन भस्म गृहीत्वा वामहस्ते निधाय उदकं संमृश्य दक्षिणहस्तेन मर्दयेत् ।

**ॐ अग्निरिति भस्म, वायुरिति भस्म, जलमिति भस्म, स्थलमिति भस्म,**
**व्योमेति भस्म, सर्वꣳहवा इदं भस्म मन एतानि चक्षूंषि भस्मानि ॥**

इति सम्मर्द्य

अभिमन्त्रणम्

**ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥**
**ॐ प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ।**
**सꣳसृज्य मातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः ॥**

धारणम्

**ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् ॥**
**यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम् ॥**

(ग) पवित्रधारणम्

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।

प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥"

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।**

**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥**

(घ) शिखाबन्धनम्

**स्नाने दाने जपे होमे सन्ध्यायां देवतार्चने ।**

**शिखाग्रन्थिं विना कर्म न कुर्याद् वै कदाचन ॥**

- आह्निकम्

गायत्र्या शिखां बध्वा

**ॐ चिद्रूपिणि महामाये दिव्यतेजः समन्विते ।**

**तिष्ठ देवि शिखाबन्धे तेजोवृद्धिं कुरुष्व मे ॥**

**ॐ मानस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः ।**

**मानो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥**

(ङ) आचमनम्[१]

**ॐ ऋग्वेदाय स्वाहा । ॐ यजुर्वेदाय स्वाहा । ॐ सामवेदाय स्वाहा ।**

(इति वारत्रयमाचम्य) **ॐ अथर्ववेदाय नमः ।** (इति हस्तप्रक्षालनम्)

(च) प्राणायामः

ॐ प्रणवस्य ब्रह्मा ऋषिः अग्निर्देवता दैवीगायत्रीच्छन्दः सप्तानां व्याहृतीनां क्रमेण विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः अग्निवायुसूर्यबृहस्पति-वरुणेन्द्रविश्वेदेवा देवताः गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तिस्त्रिष्टुब्जगत्यश्छन्दांसि,

---

२. अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमपः स्पृशेत् ॥ - सूक्तिः
हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः ।
शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ - याज्ञवल्क्यस्मृतिः

तत्सवितुरित्यस्य विश्वामित्र ऋषिः सवितादेवता गायत्रीच्छन्दः आपोज्योतिरित्यस्य प्रजापतिर्ऋषिः ब्रह्माग्निवायुसूर्यदेवता यजुश्छन्दः सर्वेषां प्राणायामे विनियोगः ॥

**ॐ भूः । ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः ।**

**ॐ तपः । ॐ सत्यम् । ॐ तत्सवितुर्वरेण्यम्** ० ।

**ॐ आपो ज्योती रसोमृतं ब्रह्म भूर्भुवः स्वरोम्** ॥




## (छ) पुनराचमनम्

### आचमनम् (प्रातः)

ॐ सूर्यश्चमेति नारायण ऋषिः अनुष्टुप्छन्दः सूर्यो देवता अपामुपस्पर्शने विनियोगः ।

ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु । यत्किञ्चिद् दुरितं मयि इदमहमापोऽमृतपानौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥

**आचमनम् (मध्याह्नः)**

अग्निश्च मेति नारायण ऋषिः प्रकृतिश्छन्दोग्नि-मन्युमन्युपतयोऽहश्च देवता अपामुपस्पर्शने विनियोगः ।

ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु । यत्किञ्च दुरितं मयि इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥

**आचमनम् (सायम्)**

सूर्यश्च मेति नारायण ऋषिः प्रकृतिश्छन्दः सूर्यमन्युमन्युपतयो रात्रिश्च देवता अपामुपस्पर्शने विनियोगः ।

ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु । यत्किञ्च दुरितं मयि इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥

**(ज) मार्जनम्**

ॐ आपो हि ष्ठेति तिसृणां सिन्धुद्वीप ऋषिः

आपो देवता गायत्री छन्दः मार्जने विनियोगः ।

**ॐ आपो हि ष्ठा मयोभुवस्तानऽऊर्जे दधातन ।**

**महे रणाय चक्षसे ॥**

**ॐ योवः शिवतमो रसस्तस्य भाजयतेह नः ।**

**उशतीरिव मातरः ॥**

**ॐ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ ।**

**आपो जनयथा च नः ॥**

**(झ) अघमर्षणम्**

ॐ द्रुपदादिवेत्यस्य कोकिलराजपुत्र ऋषिः आपो देवता अनुष्टुप्छन्दः अघमर्षणे विनियोगः ।

**ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।**

**पूतम्पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥**

(ञ) सूर्यार्घ्यः

तत आचम्य,

ॐ भूर्भुवः स्वरिति महाव्याहृतीनां परमेष्ठी प्रजापतिर्ऋषिः अग्निवायुसूर्या देवताः गायत्र्युष्णिगनुष्टुभश्छन्दांसि, तत्सवितुरित्यस्य विश्वामित्रऋषिः सवितादेवता गायत्रीछन्दः अर्घ्यदाने विनियोगः ।

**ॐ भूर्भुवः स्वः ॐ तत्सवितु० ।**

**इदमर्घ्यं समर्पयामि भगवते ब्रह्मस्वरूपिणे सूर्यनारायणाय नमः ।**

**इति वारत्रयं अर्घ्यं दद्यात् ।**

(सायं- विष्णुस्वरूपिणे/मध्याह्ने-शिवस्वरूपिणे सूर्यनारायणाय नमः इति)

(ट) सूर्योपस्थानम्

ॐ उद्वयमुदुत्यमिति द्वयोः प्रस्कण्व ऋषिः सूर्यो देवता अनुष्टुप्छन्दः, चित्रन्देवानामित्यस्य कुत्साङ्गिरस ऋषिः सूर्योदेवता त्रिष्टुप्छन्दः, तच्चक्षुरित्यस्य दध्यङ्ङाथर्वणऋषिः सूर्योदेवता उष्णिक्छन्दः सूर्योपस्थाने विनियोगः ।

**ॐ उद्वयन्तमसस्परि स्वः पश्यन्तऽउत्तरम् ।**

**देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥**

**उदुत्यञ्जातवेदसन्देवं वहन्ति केतवः ।**

**दृशे विश्वाय सूर्यम् ॥**

**चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः ।**

**आप्प्राद्यावापृथिवीऽअन्तरिक्षꣳसूर्यऽआत्मा जगतस्तस्थुषश्च ॥**

**तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।**

**पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम्प्रब्रवाम**

**शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥**

(ठ) गायत्रीषडङ्गन्यासः

तत्रादौ करन्यासः -

ॐ भूः अङ्गुष्ठाभ्यां नमः । ॐ भुवः तर्जनीभ्यां नमः ।

ॐ स्वः मध्यमाभ्यां नमः । ॐ तत्सवितुर्वरेण्यम् अनामिकाभ्यां नमः ।

ॐ भर्गो देवस्य धीमहि कनिष्ठिकाभ्यां नमः ।

ॐ धियो योनः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ।

अथ अङ्गन्यासः -

ॐ भूः हृदयाय नमः । ॐ भुवः शिरसे स्वाहा । ॐ स्वः शिखायै वषट् ।

ॐ तत्सवितुर्वरेण्यं कवचाय हुम् । ॐ भर्गो देवस्य धीमहि नेत्रत्रयाय वौषट् ।

ॐ धियो योनः प्रचोदयात् अस्त्राय फट् ॥



















अङ्गन्यास

(ड) गायत्र्यावाहनम्

ॐ तेजोसीत्यस्य परमेष्ठी प्रजापतिर्ऋषिः आज्यं देवता जगती छन्दः यजुर्गायत्र्यावाहने विनियोगः ।

**ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि प्प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥**

(ढ) गायत्र्युपस्थानम्

ॐ तुरीयपदस्य विमल ऋषिः परमात्मा देवता गायत्री छन्दः गायत्र्युपस्थाने विनियोगः ।

**ॐ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे ।**

**नमस्ते तुरीयाय दर्शताय पराय परो रजसेऽसावदोमा प्रापत् ॥**

(ण) गायत्रीध्यानम्

**ॐ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै -**

**र्युक्तामिन्दुकलानिबद्धमुकुटां तत्त्वात्मवर्णात्मिकाम् ।**

**गायत्रीं वरदाभयाङ्कुशकशा शुभ्रं कपालं गुणं,**

**शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥**

ध्यानानन्तरम् (प्रातः कालिकं ध्यानम्) -

**ब्रह्माणी चतुराननाक्षवलयं कुम्भं करैः स्रुक्स्रुवौ**

**बिभ्राणारुणकान्तिरिन्दुवदना ऋग्रूपिणी बालिका ।**

**हंसारोहणकेलिरम्बरमणेर्बिम्बाञ्चिता भूषिता**

**गायत्री हृदि भाविता भवतु नः सम्पत्समृद्ध्यै सदा ॥**

तथा (मध्याह्नकालिकं ध्यानम्) -

**रुद्राणी नवयौवना त्रिनयना वैयाघ्रचर्माम्बरा,**

**खट्वाङ्गत्रिशिखाक्षसूत्रवलयाभीतिर्दधानाम्बिका ।**

**विद्युत्पुञ्जजटाकलापविलसद्बालेन्दुमौलिः सदा,**

**सावित्री वृषवाहना सिततनुर्ध्येया यजूरूपिणी ॥**

तथा (सायङ्कालिकं ध्यानम्) -

**वृद्धा नीलघनप्रभापरिलसत्पीताम्बरा भूषिता,**

**दिव्यैराभरणैरथाङ्गकमले शङ्खं गदां बिभ्रती ।**

**तार्क्षस्कन्धगता समस्तजगदाराध्या परा वैष्णवी,**

**ध्येया चैव सरस्वती भगवती सामस्वरूपा सदा ॥**

**(त) गायत्रीशापविमोचनम्**

ब्रह्म-शापविमोचनम् -

ॐ अस्य श्रीब्रह्मशापविमोचनमन्त्रस्य ब्रह्मा ऋषिर्भुक्तिमुक्तिप्रदा ब्रह्मशापविमोचनी गायत्रीशक्तिर्देवता गायत्री छन्दः ब्रह्मशापविमोचने विनियोगः ।

मन्त्रः -

**ॐ गायत्रीं ब्रह्मेत्युपासीत यद्रूपं ब्रह्मविदो विदुः ।**

**तां पश्यन्ति धीराः सुमनसो वाचमग्रतः ॥**

**ॐ वेदान्तनाथाय विद्महे हिरण्यगर्भाय धीमहि तन्नो ब्रह्म प्रचोदयात् ।**

**ॐ देवि ! गायत्रि ! त्वं ब्रह्मशापाद्विमुक्ता भव ।**

**वसिष्ठशापविमोचनम् –**

ॐ अस्य श्रीवसिष्ठशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता वसिष्ठ ऋषिर्वसिष्ठानुगृहीता गायत्रीशक्तिर्देवता विश्वोद्भवा गायत्री छन्दः वसिष्ठशापविमोचने विनियोगः ।

मन्त्रः -

**ॐ सोऽहमर्कमयं ज्योतिरात्मज्योतिरहं शिवः ।**

**आत्मज्योतिरहं शुक्रः सर्वज्योती रसोऽस्म्यहम् ॥**

इति पठित्वा योनिमुद्रां प्रदर्श्य गायत्रीत्रयं पठेत्

**ॐ देवि ! गायत्रि ! त्वं वसिष्ठशापाद्विमुक्ता भव ।**

**विश्वामित्रशापविमोचनम्**

ॐ अस्य श्रीविश्वामित्रशापविमोचनमन्त्रस्य नूतनसृष्टिकर्ता विश्वामित्र ऋषिर्विश्वामित्रानुगृहीता गायत्री शक्तिर्देवता वाग्देहा गायत्री छन्दः विश्वामित्रशापविमोचनार्थं जपे विनियोगः ।

मन्त्रः -

ॐ गायत्रीं भजाम्यग्निमुखीं विश्वगर्भां यदुद्भवाः ।
देवाश्चक्रिरे विश्वसृष्टिं तां कल्याणीमिष्टकरीं प्रपद्ये ॥
ॐ देवि ! गायत्रि ! त्वं विश्वामित्रशापाद्विमुक्ता भव ।

प्रार्थना –

ॐ अहो देवि महादेवि सन्ध्ये विद्ये सरस्वति !
अजरे अमरे चैव ब्रह्मयोनिर्नमोऽस्तु ते ॥
ॐ देवि ! गायत्रि ! त्वं ब्रह्मशापाद्विमुक्ता भव,
वसिष्ठशापाद्विमुक्ता भव, विश्वामित्रशापाद्विमुक्ता भव ।

(थ) मुद्राप्रदर्शनम्

सुमुखं सम्पुटं चैव विततं विस्तृतं तथा ।
द्विमुखं त्रिमुखं चैव चतुष्पञ्चमुखं तथा ॥
षण्मुखाऽधोमुखं चैव व्यापकाञ्जलिकं तथा ।
शकटं यमपाशं च ग्रथितं चोन्मुखोन्मुखम् ॥
प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मो वराहकम् ।
सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥
एता मुद्राश्चतुर्विंशज्जपादौ सम्प्रदर्शयेत् ॥


१. सुमुखम्


२. सम्पुटम्


३. विततम्


४. विस्तृतम्


५. द्विमुखम्


६. त्रिमुखम्


७. चतुर्मुखम्


८. पञ्चमुखम्


९. षण्मुखम्


१०. अधोमुखम्


११. व्यापकाञ्जलिपम्


१२. शकटम्


१३. यमपाशम्


१४. ग्रथितम्


१५. उन्मुखोन्मुखम्


१६. प्रलम्बम्


१७. मुष्टिकम्


१८. मत्स्यः


१९. कूर्मः


२०. वराहकम्


२१. सिंहाक्रान्तम्


२२. महाक्रान्तम्


२३. मुद्गरम्


२४. पल्लवम्

### (द) गायत्रीजपः[१]

ॐ प्रणवस्य ब्रह्मा ऋषिः परमात्मा देवता गायत्री छन्दः, व्याहृतीनां प्रजापतिर्ऋषिः अग्निवायुसूर्या देवताः गायत्री छन्दः, तत्सवितुरित्यस्य विश्वामित्र ऋषिः सविता देवता गायत्री छन्दः सर्वपापक्षयार्थे गायत्रीमन्त्रजपे विनियोगः ।

---

३. गृहे जपः समः प्रोक्तो गोष्ठे शतगुणः स्मृतः ।
आरामे च तथाऽरण्ये सहस्रगुण उच्यते ॥
अयुतः पर्वते पुण्ये नद्यां लक्षगुणस्तुः सः ॥
कोटिर्देवालये प्राहुरनन्तः शिवसन्निधौ ॥ - आह्निकम्

ततः आचम्य,

ॐ भूर्भुवः स्वः तत्सवितु ०।

(समग्रमन्त्रोच्चारणपूर्वकं जपः)



करमाला

(ध) उत्तराङ्गमुद्राप्रदर्शनम्

**“सुरभिर्ज्ञानवैराग्यं योनिः शङ्खोऽथ पङ्कजम् ।**

**लिङ्गं निर्वाणकं चैव जपान्तेऽष्टौ प्रदर्शयेत् ॥**



२. ज्ञानम्



१. सुरभिः



३. वैराग्यम्



४. योनिः



५. शङ्खः



६. पङ्कजम्



७. लिङ्गम्



८. निर्वाणम्

(न) **जपसमर्पणम्**

ॐ देवा गातुविद इत्यस्य मनसस्पतिर्ऋषिः

वातो देवता विराट् छन्दः जपनिवेदने विनियोगः ।

**ॐ देवा गातुविदो गातुं वित्त्वा गातुमित ।**

**मनसस्पतऽइमन्देव यज्ञꣳस्वाहा वातेधाः ॥**

अनेन प्रातः (मध्याह्नः/सायम्) सन्ध्याङ्गभूतेन (अमुकसङ्ख्याकेन) गायत्रीमन्त्रजपाख्येन कर्मणा श्रीभगवान् ब्रह्मस्वरूपी (शिवस्वरूपी/विष्णुस्वरूपी) श्रीसूर्यनारायणः प्रीयताम् न मम ॥

**ततो गायत्रीं प्रार्थयेत्**

**यदक्षरपदभ्रष्टं मात्राहीनं तु यद्भवेत् ।**

**तत्सर्वं क्षम्यतां देवि काश्यपप्रियवादिनि ॥**

(प) **सन्ध्याविसर्जनम्**[१]

ॐ उत्तरे शिखरे इत्यस्य कश्यप ऋषि सन्ध्या देवता अनुष्टुप् छन्दः सन्ध्याविसर्जने विनियोगः ।

**ॐ उत्तरे शिखरे देवि भूम्यां पर्वतमस्तके ।**

**ब्राह्मणेभ्यो विनिर्मुक्ता गच्छ देवि यथासुखम् ॥**

**ततः शिखामुक्तिः**

**ब्रह्मपाशसहस्रेण रुद्रशूलशतेन च ॥**

**विष्णुचक्रसहस्रेण शिखामुक्तिं करोम्यहम् ॥**

इति शिखाग्रन्थिं निर्वर्त्य पुनस्तूष्णी शिखां बध्नीयात् ॥

**ततो भूमृत्तिकाबन्धनम्**

ॐ तत्सवितु ... ... इति मन्त्रं पठित्वा तत्रत्यां मृदं धारयेत् ।

**॥ इति सामान्यसन्ध्याविधिः ॥**

---

४. पादशेषं पीतशेषं सन्ध्याशेषं तथैव च ॥
शुनो मूत्रसमं तोयं पीत्वा चान्द्रायणं चरेत् ॥

**सन्ध्याको सामग्री**

जौ-तिल, कुश, भस्म, पञ्चपात्र-२, थाली-२, आचमनी- २, अर्घ-१, जल राख्ने ठुलो भाँडो, आसन, माला, गौमुखी, गायत्रीको फोटो, सामान्य पूजाको सामग्री आदि ।

## शब्दार्थाः

| | | |
|---|---|---|
| आसनशुद्धिः | = | बस्ने आसन पवित्र बनाउनु |
| भस्मधारणम् | = | भस्म लगाउनु |
| पवित्रधारणम् | = | कुशको औँठी लगाउनु |
| शिखाबन्धनम् | = | टुपी (शिखा) को पवित्र गाँठो बनाउनु |
| पूरकः | = | बायाँ नाकबाट सास तानेर भर्नु |
| कुम्भकः | = | सास रोक्नु |
| रेचकः | = | दायाँ नाकबाट सास छोड्नु |
| मार्जनम् | = | जल सेचन गर्नु |
| अघमर्षणम् | = | पाप पखाल्नु |
| सूर्यार्घ्यः | = | सूर्यलाई जलदान गर्नु (सूर्यलाई अर्घ्य दिनु) |
| सूर्योपस्थानम् | = | मन्त्रपूर्वक सूर्यको ध्यान गर्नु |
| शापविमोचनम् | = | ऋषिहरूले दिएको श्रापबाट मन्त्रलाई मुक्त गराउनु |
| जपसमर्पणम् | = | आफूले गरेको जपादि कर्म देवतालाई अर्पण गर्नु |
| शिखामुक्तिः | = | शिखा खोल्नु |
| करमाला | = | जप गर्दा प्रयोगमा आउने हातको माला |

## अभ्यासः

१. अधोलिखितानां प्रश्नानामुत्तराणि लिखत

(क) भस्मधारणपवित्रधारणमन्त्रयोः प्रतीकमात्रं लेख्यम् ।

(ख) 'पृथ्वि त्वया' अस्य मन्त्रस्य कुत्र कस्मिन् कर्मणि विनियोगः ?

(ग) 'तेजोसि' 'गायत्र्यस्येकपदी' इमौ मन्त्रौ कुत्र विनियुज्येते ?

(घ) ब्रह्मशापविमोचनमन्त्रः कः ?

(ङ) जपसमर्पणमन्त्रं लिखत ।

(च) 'देवा गातुविदः' कस्मिन्कर्मणि विनियुक्तोऽयं मन्त्रः ?

(छ) त्रिकालसन्ध्यायाः कालनिर्धारणं कुरुत ।

(ज) सायंसन्ध्यायाः प्रतिज्ञासङ्कल्पवाक्यस्वरूपं लिखत ।

(झ) मार्जने पठनीयाः मन्त्राः के ?

(ञ) सूर्याघ्यदाने प्रातर्मध्याह्नसायङ्कालिकः सूर्यः केन केन स्वरूपेण अभिधीयते ?

(ट) गायत्र्याः षडङ्गन्यासमन्त्रान् लिखत ।

(ठ) सामान्यः गायत्रीध्यानश्लोकः कः ?

(ड) गायत्रीजपानन्तरं प्रदर्शनीया मुद्राः काः ? हस्तक्रियाञ्च सचित्रमुट्टङ्कयत ।

(ढ) गायत्रीमन्त्रजपसम्बद्धं विनियोगवाक्यं लिखत ।

## २. परस्परं मेलयत

| | |
|---|---|
| प्राणायामे ब्रह्मरन्ध्रम् | पूरकः (विष्णुस्मरणम्) |
| प्राणायामे हृदयकमलम् | रेचकः (शिवस्मरणम्) |
| प्राणायामे मूलाधारः | कुम्भकः (ब्रह्मस्मरणम्) |

## ३. निम्नलिखितं मन्त्रं पूर्णं कुरुत

उद्वयन्तम ----------------------------------------- उत्तरम् ।

देवन्देवत्रा ----------------------------------------- ज्योतिरुत्तमम् ॥

## (क) सङ्क्षिप्तभोजनविधिः

सोत्तरीयं धौतं वस्त्रं परिधाय हस्तौ पादौ प्रक्षाल्य शुद्धासने प्राङ्मुख उपविश्याऽऽचम्य भोजनपात्रेऽन्नं परिवेष्य

**ॐ यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति ।**
**एवं मण्डलभस्मैतत्सर्वभूतानि रक्षतु ॥**

इति मन्त्रेणान्नं परितः भस्मना जलेन वा चतुष्कोणमण्डलं[1] विधाय

**ॐ पितुन्नु स्तोषं महो धर्माणन्तविषीम् ।**
**यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥**

इति मन्त्रेणान्नं स्तुत्वा

**ॐ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः ।**
**शिवाय च शिवतराय च ॥**

इति मन्त्रेणाभिमन्त्र्य

**ॐ सत्यन्त्वर्तेन परिषिञ्चामि ।** (प्रातः)

**ॐ ऋतं त्वा सत्येन परिषिञ्चामि ।** (सायम्)

इति मन्त्रेण जलेन प्रोक्ष्य

**ॐ तेजोसि शुक्रमस्यमृतमसि धाम नामासि प्रियन्देवानामनाधृष्टं देवयजनमसि ॥**

इत्यभिमृश्यात्मानमग्निं ध्यायेत् ।

---

१. चतुष्कोणं ब्राह्मणस्य, त्रिकोणं क्षत्रियस्य, मण्डलं वैश्यस्य, अभ्युक्षणं शूद्रस्य ।

ततो भूमौ बलीन् दद्यात्

**"ॐ भूपतये स्वाहा । ॐ भुवनपतये स्वाहा ।**

**ॐ भूतानां पतये स्वाहा । ॐ चित्राय स्वाहा ।**

**ॐ चित्रगुप्ताय स्वाहा । ॐ सर्वेभ्यो भूतेभ्यः स्वाहा । इति ।**

ततो हस्ते जलमादाय

**ॐ अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।**

**त्वं ब्रह्मस्त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वं विष्णोः परमं पदम् ॥**

**ॐ अमृतोपस्तरणमसि स्वाहा ॥**

इति मन्त्रेणार्धं जलं भूमौ बल्युपरि निक्षिप्य शेषमर्धं पिबेत् ।

ततोऽन्नममृतं ध्यायन् मौनीभूत्वा हस्तचापल्यादिरहितो मुखे पञ्च प्राणाहुतीर्जुहुयात् ।

**ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा ।**

**ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा ।**

इति पञ्चभिर्मन्त्रैः पञ्चग्रासान् जिह्वया ग्रसेद्दन्तैर्नोपस्पृशेत् ।

प्राग्द्रवरूपमश्नीयान्मध्ये कठिनमन्ते पुनर्द्रवाशी स्यात् । पूर्वं मधुरं मध्ये लवणाम्लौ पश्चात्कटुतिक्तादिकान् यथासुखं भुञ्जीत ।

एवं यथारुचि भुक्त्वा भुक्तशेषमन्नमादाय -

**ॐ मद्भुक्तोच्छिष्टशेषं ये भुञ्जते पितरोऽधमाः ।**

**तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठतु ॥**

इति पितृतीर्थेन भूमौ दत्त्वा हस्ते जलमादाय ।

**ॐ अमृतापिधानमसि स्वाहा ।**

इत्यर्धं पीत्वा

**ॐ रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् ।**

**अर्थिनां सर्वभूतानामक्षय्यमुपतिष्ठतु ॥**

इत्यर्धं भूमौ निक्षिपेत्

ततस्तस्माद्देशादपसृत्य गण्डूषशलाकादिभिर्मुखं शोधयेत् ।

घृतपायसदधिसक्तुपलमधुभ्योऽन्यद् भोज्यमन्नं किञ्चित्परिशेषयेन्न सर्वभोजी स्यात् ।

ततः

ॐ अगस्त्यं वैनतेयं[१] च शनिं च वडवानलम् ।
आहारपरिपाकार्थं स्मरेद्भीमं च पञ्चमम् ॥

इत्युदरमालभ्य

ॐ शर्यातिं च सुकन्यां च च्यवनं शक्रमश्विनौ ।
भोजनान्ते स्मरेन्नित्यं तस्य चक्षुर्न हीयते ॥

इति स्मृत्वा नेत्रे सम्प्रोक्ष्य मुखशुद्धिं कुर्यात् ।

॥ इति सङ्क्षिप्तभोजनविधिः ॥

**(ख) सङ्क्षिप्तशयनविधिः**

**शयनकालः**

उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्नींस्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्याथ संविशेत् ॥

- याज्ञवल्क्यः

शयने दिग्विचारः

प्राक्शिरा शयने विद्या धनमायुश्च दक्षिणे ।
पश्चिमे प्रबला चिन्ता हानिर्मृत्युरथोत्तरे ॥

- मार्कण्डेयः

स्वगृहे प्राक्शिराः शेते श्वाशुर्ये दक्षिणा शिरा ।
प्रत्यक्शिरा प्रवासे तु न कदाचिदुदक्शिरा ॥

- गार्ग्यः

---

३. कुम्भकर्णञ्च इति पाठभेदः

रात्रिसूक्तं जपन्स्मृत्वा देवाँश्च सुखशायिनः ॥

नमस्कृत्याव्ययं विष्णुं समाधिस्थं स्वपेन्निशि ॥

- मार्कण्डेयः

**शयनविधिः**

हस्तौ पादौ प्रक्षाल्य शिरःस्थाने पूर्णकुम्भं संस्थाप्य रात्रिस्मरणसूक्तं पठेत् -

ॐ जले रक्षतु वाराहः स्थले रक्षतु वामनः ।

अटव्यां नारसिंहश्च सर्वतः पातु केशवः ॥

जले रक्षतु नन्दीशः स्थले रक्षतु भैरवः ।

अटव्यां वीरभद्रश्च सर्वतः पातु शङ्करः ॥

अर्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः ॥

बीभत्सुर्विजय कृष्णः सव्यसाची धनञ्जयः ॥

तिस्रो भार्याः कफल्लस्य दाहिनी मोहिनी सती ।

तासां स्मरणमात्रेण चोरो गच्छति निष्फलः ॥

कफल्लकः ! कफल्लकः !! कफल्लकः !!!

- आह्निकम्

अगस्तिर्माधवश्चैव मुचुकुन्दो महाबलः ।

कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ।

- गोभिलः

ततो रात्रिस्मरणसूक्तम् -

हरिः ॐ आरात्रिपार्थिवꣳरजः पितुरप्रायिधामभिः ॥

दिवः सदाꣳसि बृहती व्वितिष्ठसऽआत्त्वेषं व्वर्त्तते तमः ॥

ॐ उषस्तच्चित्रमाभरास्मभ्यं व्वाजिनीवति ॥

येन तोकञ्च तनयञ्च धामहे ॥

इति रात्रिस्मरणसूक्तमुक्त्वा समाधिस्थं स्वपेत् ।

॥ इति सङ्क्षिप्तशयनविधिः ॥

## शब्दार्थाः

| | | |
|---|---|---|
| सोत्तरीयम् | = | उत्तरीय (उपर्ना)ले सहित |
| धौतम् | = | धोती |
| परिविष्य | = | पस्केर |
| परितः | = | चारैतिर |
| जलेन प्रोक्ष्य | = | पानीले सेचन गरेर |
| बल्युपरि | = | मन्त्रद्वारा देवतालाई दिइएको बलिमाथि |
| निक्षिप्य | = | राखेर |
| शेषमर्धम् | = | बाँकी रहेको आधा भाग |
| मौनीभूत्वा | = | नबोलीकन |
| हस्तचापल्यादिरहितः | = | हात नचलाईकन, चञ्चल नभईकन |
| प्राणाहुतिः | = | प्राणलाई आहुति |
| जिह्वया | = | जिब्राले |
| लवणम् | = | नुन |
| अम्लः | = | अमिलो |
| कटुः | = | पिरो |
| तिक्तम् | = | तितो |
| मधुरम् | = | मिठो |
| शयने दिग्विचारः | = | सुत्दा शिर कुन दिशामा गर्ने भन्ने बारेको विचार |
| पूर्णकुम्भम् | = | जलले भरिएको घडा |
| रात्रिसूक्तम् | = | रातमा सुत्ने बेलामा पढ्ने मन्त्रहरू |
| समाधिस्थम् | = | समाधिमा रहेको वा भएको |
| स्वपेत् | = | सुतोस् |

## अभ्यासः

१. निम्नाङ्कितानां प्रश्नानामुत्तराणि लिखत

(क) भोजनारम्भे किं कर्तव्यम् ?

(ख) भोजनं परितः जलेन भस्मना वा क्षत्रियः कीदृशं मण्डलं लिखति ?

(ग) भोजनकाले बलिदानमन्त्राः लेखनीयाः ।

(घ) शयनात् पूर्वं कर्तव्यानि कर्माणि कानि ?

(ङ) रात्रिस्मरणसूक्तं किम् ?

(च) शयने दिग्विचारपद्यं लिखत ।

(छ) भोजनान्ते उदरमालभ्य पठनीयः श्लोकः कः ?

(ज) प्राक्शिरा शयने किं फलम् ?

(झ) याज्ञवल्क्योक्तः शयनकालः कः ?

(ञ) अगस्तिर्माधवश्चैव मुचुकुन्दो महाबलः ।
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥
अस्य श्लोकस्यार्थं लिखत ।

(ट) "पञ्चभिर्मन्त्रैः पञ्चग्रासान् जिह्वया ग्रसेत्, दन्तैर्नोपस्पृशेत्" इत्यस्याशयं विवृणुत ।

# पञ्चाङ्गज्ञानम्

## परिचय

तिथि, वार, नक्षत्र, योग र करण यी पाँचलाई ज्योतिषशास्त्रमा पञ्चाङ्ग भनिएको छ । तिथि, वार आदि यिनै पाँच कुराको प्राधान्य भएकाले पात्रोलाई पञ्चाङ्ग भन्ने गरेको हो । हामीले पञ्चाङ्ग शब्दबाट गौणरूपमा पात्रोलाई र प्रधानरूपले त्यसमा उल्लेख गरिएका तिथि, वार, नक्षत्र, योग, करणहरूलाई सङ्केत गरिएको कुरा बुझ्नुपर्छ । यद्यपि पात्रोमा हाम्रा व्यवहारोपयोगी धेरै कुराहरू सङ्ग्रह गरेर राखिएका हुन्छन्, तापनि तिथि, वार, नक्षत्र आदि पञ्चाङ्गसँग कर्मकाण्डको घनिष्ठ सम्बन्ध भएकाले अरू विषयको अपेक्षामा यसलाई प्रधानता दिइएको हो ।

वैदिक सनातन (हिन्दु) धर्म अन्तर्गत हाम्रो कर्मकाण्डमा प्रचलित जति पनि यज्ञ, दान, पूजा, व्रत, चाड, पर्व, जन्मदिवस, पितृकार्य आदि छन्, ती सबै प्रायः चान्द्रमानका आधारमा (अर्थात् यिनै तिथि, वार आदि पञ्चाङ्गअनुसार) चलेका छन् । त्यसैले प्रत्येक कर्ममा गरिने सङ्कल्पवाक्यहरूमा अरू मुहूर्त लग्नहरूको अपेक्षा पञ्चाङ्गको विशेष उल्लेख गरिने शास्त्र तथा शिष्टपरम्परा दुवै देखिएकाले कर्मकाण्डको र पञ्चाङ्गको विशेष सम्बन्ध भएको बुझिन्छ । तर यसको अर्थ छात्रले पात्रो हेर्दा केवल पञ्चाङ्ग मात्र जाने पुग्छ, अरू अंश जान्नु पर्दैन भन्ने होइन, किन्तु पात्रोमा उल्लेख भएका व्यवहारमा चाहिने सबै कुरा उसले जान्न, बुझ्न सक्ने हुनुपर्दछ । जुनसुकै कर्म गर्दा पनि कर्मको आदिमा सङ्कल्पवाक्य प्रयोग गरिन्छ । सङ्कल्पवाक्यको प्रयोग गर्दा संवत्सर, अयन, ऋतु, महिना, पक्ष, वार, तिथि र नक्षत्र आदिको पनि उल्लेख गर्नुपर्दछ । यसको निमित्त संवत्सर कति छन् ? अयन, ऋतु आदि कति छन् ? तिनका नाम के के हुन् ? यी कति कति समयमा परिवर्तन हुन्छन् ? भन्ने कुराको ज्ञान हुनु अत्यावश्यक हुन्छ । यसकारण ती संवत्सर आदिका नाम र सङ्ख्याहरू यहाँ उल्लेख गरिन्छन् । यहाँ उल्लेख नभएका अन्य कुराहरू छात्रले पञ्चाङ्ग (पात्रो) को अध्ययन गरेर जान्नुपर्दछ ।

कर्मकाण्डअन्तर्गतका यज्ञ, पूजा, दान, व्रत, विवाह, व्रतबन्ध आदि संस्कार जे गरिन्छन् ती प्रत्येक कर्मसँग कर्मफल जोडिएको हुन्छ । कर्म गरेपछि राम्रो या नराम्रो सानो वा ठुलो

जेजस्तो होला केही न केही कर्मफल अवश्य मिल्छ । यद्यपि कर्मको शुद्धाशुद्धिबाट पनि कर्मफलमा भिन्नता अर्थात् राम्रो/नराम्रो हुन सक्छ । तर तिथि, वार, नक्षत्र, योग, करण, मुहूर्त, लग्न आदि समयको शुद्धाशुद्धि त्यसभन्दा पनि बढी महत्त्व राख्ने हुँदा त्यसमा विशेष विचार गर्नुपर्दछ । कर्मकाण्डअन्तर्गतका अरू कर्मसँग पञ्चाङ्गको सम्बन्ध जोडिएको छ । त्यसैले हरेक कर्म गर्दा पञ्चाङ्गमा विचार पुऱ्याएर गर्नुपर्छ, जसले गर्दा सो कर्मले निर्दिष्ट गरेको फल प्राप्त होस् ।

**(क) संवत्सराः**

प्रभवादयः षष्टिसंवत्सराः सन्ति । तेषां नामानि यथा

**प्रभवः, विभवः, शुक्लः, प्रमोदः, प्रजापतिः, अङ्गिराः, श्रीमुखः, भावः, युवा, धाता, ईश्वरः, बहुधान्यः, प्रमाथी, विक्रमः, वृषः, चित्रभानुः, सुभानुः, तारणः, पार्थिवः, व्ययः, सर्वजित्, सर्वधारी, विरोधी, विकृतिः, खरः, नन्दनः, विजयः, जयः, मन्मथः, दुर्मुखः, हेमलम्बी, विलम्बी, विकारी, शर्वरी, प्लवः, शुभकृत्, शोभनः, क्रोधी, विश्वावसुः, पराभवः, प्लवङ्गः, कीलकः, सौम्यः, साधारणः, विरोधकृत्, परिधावी, प्रमादी, आनन्दः, राक्षसः, नलः, पिङ्गलः, कालयुक्तः, सिद्धार्थी, रौद्रः, दुर्मतिः, दुन्दुभिः, रुधिरोद्गारी, रक्ताक्षी, क्रोधनः, क्षयः** इति ।

एते संवत्सराः प्रतिवत्सरं चैत्रशुक्लप्रतिपद आरभ्य परिवर्तन्ते ।

**(ख) अयने**

अयने द्वे भवतः, उत्तरायणं दक्षिणायनञ्चेति ।

**माघमासादारभ्य आषाढमासपर्यन्तं षण्मासाः उत्तरायणम्,**

**श्रावणमासादारभ्य पौषमासपर्यन्तं षण्मासा दक्षिणायनमिति ।**

**(ग) ऋतवः**

वसन्तः, ग्रीष्मः, वर्षा, शरद्, हेमन्तः, शिशिरश्चेति षड् ऋतवः सन्ति । एकस्मिन्नेकस्मिन् ऋतौ द्वौ द्वौ मासौ भवतः, यथा -

**चैत्रवैशाखौ द्वौ मासौ वसन्तर्तुः, ज्येष्ठः आषाढश्च मासौ ग्रीष्मः, श्रावणभाद्रमासौ वर्षा, आश्विनकार्तिकमासौ शरद्, मार्गशीर्षपौषमासौ हेमन्तः, माघः फाल्गुनश्च शिशिरर्तुरिति ।**

### (घ) मासाः

वैशाखमासादारभ्य चैत्रमासपर्यन्तं द्वादशमासाः भवन्ति । तेषां नामानि यथा -

**वैशाखः, ज्येष्ठः, आषाढः, श्रावणः, भाद्रः, आश्विनः, कार्तिकः, मार्गशीर्षः, पौषः, माघः, फाल्गुनः, चैत्रश्चेति ।**

### (ङ) पक्षौ

शुक्लपक्षः कृष्णपक्षश्चेति द्वौ पक्षौ स्तः ।

**अमावास्यायाः परतः प्रतिपद आरभ्य पूर्णिमापर्यन्तं शुक्लपक्षः ।**

**पूर्णिमायाः परतः प्रतिपद आरभ्य अमावास्यापर्यन्तं कृष्णपक्ष इति ।**

### (च) तिथयः

तिथयः षोडश भवन्ति । तेषां नामानि यथा -

**प्रतिपदा, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमी, अष्टमी, नवमी, दशमी, एकादशी, द्वादशी, त्रयोदशी, चतुर्दशी, पूर्णिमा, अमावास्या चेति ।**

### (छ) वासराणि

सप्त वासराणि भवन्ति । तेषां नामानि यथा -

**आदित्यवासरः, सोमवासरः, भौमवासरः, बुधवासरः, बृहस्पतिवासरः, शुक्रवासरः, शनिवासरश्चेति ।**

### (ज) नक्षत्राणि

अश्विन्यादीनि सप्तविंशति-नक्षत्राणि भवन्ति । तेषां नामानि यथा -

**अश्विनी, भरणी, कृत्तिका, रोहिणी, मृगशिराः, आर्द्रा, पुनर्वसू, तिष्यः, अश्लेषा, मघा, पूर्वफाल्गुनी, उत्तरफाल्गुनी, हस्ता, चित्रा, स्वाती, विशाखा, अनुराधा, ज्येष्ठा, मूलम्, पूर्वाषाढा, उत्तराषाढा (अभिजित्), श्रवणः, धनिष्ठा, शतभिषा, पूर्वभाद्रपदाः, उत्तरभाद्रपदा, रेवतीति ।**

### (झ) योगाः

विष्कम्भादयो योगाः सप्तविंशतिः । तेषां नामानि यथा -

**विष्कम्भः, प्रीतिः, आयुष्मान्, सौभाग्यः, शोभनः, अतिगण्डः, सुकर्मा, धृतिः, शूलम्,**

**गण्डः, वृद्धिः, ध्रुवः, व्याघातः, हर्षणः, वज्रः, सिप्रः (सिद्धः), व्यतीपातः, वरीयान् (वर्याणः), परिघः, शिवः, सिद्धिः, साध्यः, शुभः, शुक्लः, ब्रह्मा, ऐन्द्रः, वैधृतिः इति ।**

**(ञ) करणानि**

बवादीनि सप्तचलकरणानि भवन्ति । तेषां नामानि यथा -

**बवः, बालवः, कौलवः, तैतिलः, गरः, वणिक्, विष्टिः (भद्रा) इति ।**

स्थिरकरणानि चत्वारि सन्ति यथा -

**शकुनिः, चतुष्पादः, नागः, किंस्तुघ्नः ।**

**(ट) सूर्यचन्द्रबृहस्पतीनां तात्कालिकराशिज्ञानम्**

**१. तत्र सूर्यस्य राशिज्ञानम्**

सूर्य एकस्मिन् राशौ एकमासपर्यन्तं तिष्ठति । वैशाखमासादारभ्य चैत्रमासपर्यन्तं द्वादशमासेषु मेषराशेरारभ्य मीनराशिपर्यन्तं क्रमेण द्वादश राशयो भवन्ति । तेषामुदाहरणानि यथा -

**वैशाखे मेषः, ज्येष्ठे वृषः, आषाढे मिथुनः, श्रावणे कर्कटः, भाद्रे सिंहः, आश्विने कन्या, कार्त्तिके तुला, मार्गशीर्षे वृश्चिकः, पौषे धनुः, माघे मकरः, फाल्गुने कुम्भः, चैत्रे मीनः ।** (अर्थात् वैशाखमासे सूर्यः मेषराशौ तिष्ठति) । इति क्रमानुसारेण बोद्धव्यम् ।

**२. चन्द्रस्य राशिज्ञानम्**

**चन्द्रः सार्धद्विदिनपर्यन्तमेकराशौ तिष्ठति ।**

पञ्चाङ्गमवलोक्य चन्द्रस्य राशिज्ञानं कर्तव्यम् ।

**३. बृहस्पतेः राशिज्ञानम्**

सामान्यतया **बृहस्पतिरेकसंवत्सरपर्यन्तमेकराशौ** तिष्ठति । तच्च पञ्चाङ्गमवलोक्य बोद्धव्यम् ।

॥ इति ॥

## शब्दार्थाः

| | | |
|---|---|---|
| संवत्सराः | = | संवत्सरहरू |
| अयने | = | दुई अयन (उत्तरायण, दक्षिणायन) |
| ऋतवः | = | ऋतुहरू |
| मासाः | = | महिनाहरू |
| पक्षौ | = | पक्षहरू |
| तिथयः | = | तिथिहरू |
| वासराणि | = | बारहरू |
| नक्षत्राणि | = | नक्षत्रहरू |
| योगाः | = | योगहरू |
| करणानि | = | करणहरू |
| तात्कालिक | = | तत्कालको (त्यसबेलाको) |
| सूर्यस्य राशिज्ञानम् | = | सूर्यको राशिज्ञान |
| मेषराशौ तिष्ठति | = | मेषराशिमा रहन्छ |
| पञ्चाङ्गमवलोक्य | = | पात्रो हेरेर |
| बोद्धव्यम् | = | जान्नुपर्छ |

## अभ्यासः

१. निम्नाङ्कितानां प्रश्नानामुत्तराणि लिखत

(क) किं नाम पञ्चाङ्गम् ?

(ख) कति नक्षत्राणि सन्ति ? तेषां नामानि कानि ?

(ग) बृहस्पतिः कियत्कालपर्यन्तमेकराशौ तिष्ठति ?

(घ) सूर्य एकराशौ कियत्कालं तिष्ठति ?

(ङ) चलकरणनामानि लिखत ।

(च) कति संवत्सरा भवन्ति ?

(छ) प्रतिवर्षं कदा संवत्सरपरिवर्तनं जायते ?

(ज) माघमासे सूर्यस्यायनं किम् ?

(झ) श्रावणभाद्रमासौ केन ऋतुनाभिधीयेते ?

(ञ) तिथयः कति सन्ति ? तेषां नामानि लिखत ।

(ट) कियत्कालपर्यन्तं चन्द्रः एकराशौ तिष्ठति ?

(ठ) सूर्यस्य राशिपरिवर्तनाधारः कः ?

(ड) अयनपरिवर्तनकालः कः ?

(ढ) स्थिरकरणानि कानि ? तेषां नामानि लिखत ।

२. शुद्धं कृत्वा पुनर्लेखनं कुरुत

गृष्मः, सरद्, सिसिर, पुर्णिमा, अश्लेसा, धनीष्ठा, किङ्स्तूध्नः, विस्चिकः मिनः

# सङ्कल्पः यज्ञोपवीतधारणविधिः च

## (क) विशेषवाक्ययोजनपूर्वकं सङ्कल्पज्ञानम्

### परिचय

वैदिक सनातन (हिन्दु) धर्म अनुसार गरिने हरेक कर्मकाण्ड अर्थात् धार्मिक कृत्यहरू यज्ञ, पूजा, दान, संस्कार, श्राद्ध आदि जेजति छन् ती सबै कृत्यहरू सङ्कल्पपूर्वक आरम्भ गरिन्छन् । सङ्कल्प पढ्नुको तात्पर्य - 'आज म यस दिनमा यस स्थानमा बसेर यो कामना लिएर यसरी यस्तो काम गर्दै छु' भनेर मनको भाव व्यक्त गर्नु हो । यहाँ कर्म भन्नाले नित्य, नैमित्तिक, काम्य गरी तीन प्रकारका कर्महरू आउँछन् । **"सङ्कल्पः कर्ममानसम्"** अर्थात् मनको कर्म नै सङ्कल्प हो भने **"सङ्कल्पविकल्पात्मकं मनः"** अर्थात् कार्यको सङ्कल्प र विकल्प गर्नु मनका धर्म हुन् । त्यसैले सङ्कल्प किन पढिरहनु ? मनमा सङ्कल्प गरेको छँदैछ, फेरि सङ्कल्पवाक्य पढिरहनुपर्ने किन ? तर जुनसुकै कर्ममा पनि सङ्कल्पवाक्य पढ्नू भन्ने शास्त्रवचन भएको र शिष्टपरम्परा पनि त्यस्तै रहेकाले सङ्कल्पवाक्य पढ्नै पर्दछ । नबोली हैन बोलेर दिएकै राम्रो हुन्छ ।

सङ्कल्पवाक्य प्रयोग गर्दा हामीलाई धेरै कुराको जानकारी हुनुपर्छ, अर्थात् यो सृष्टि कसको आज्ञाले वा कहिलेदेखि कसले चलायो, आज कुन कल्प चलिरहेको छ, कुन इन्द्र र मनुको पालो छ, कुन युग छ, हामी कुन लोकमा छौँ, द्वीप कुन हो, यो स्थान कुन हो, कुन देश, पर्वत र नदीदेखि कतापट्टि पर्छ, संवत्सर, अयन, ऋतु, पक्ष, महिना कुन हो र आजको बार, तिथि के हो, ग्रहहरू कुन कुन राशिमा बसेका छन् ? इत्यादि धेरै कुराको बोध हुनु आवश्यक छ । ईश्वरीय कानुनमा पनि तिथि, मिति, मुकाम आदि उल्लेख हुनु आवश्यक छ ।

नित्य, नैमित्तिक, काम्य जुनसुकै यज्ञ, पूजा, दान, संस्कार पितृकार्य जे कर्म गर्न लागिएको हो, त्यस कर्मको सुरुमा प्रतिज्ञासङ्कल्प गरिन्छ । त्यसरी प्रयोग गरिने सङ्कल्पको सामान्य उदाहरण यहाँ प्रस्तुत छ -

### (अ) सङ्कल्पवाक्यम्

**हरिः ॐ तत्सत् ३, ॐ विष्णुः ३, अद्येह श्रीमद्भगवतो महापुराणपुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकलजगतः सृष्टिकारिणो ब्रह्मणो द्वितीये परार्धे श्रीश्वेतवाराहकल्पे**

प्रह्लादाधिपत्ये मनौ सप्तमे वैवस्वतमन्वन्तरे सत्यत्रेताद्वापरान्ते बौद्धावतारे अष्टाविंशतितमे कलियुगे तस्य प्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्ते गङ्गादेव्या उत्तरदिग्भागे हिमाचलस्य दक्षिणपार्श्वे नेपालदेशे पाशुपतक्षेत्रे पशुपतेः गुह्यकाल्याश्च (अमुक) दिग्भागे (अमुक) नगरे, ग्रामे वा इह पुण्यभूमौ षष्टिसंवत्सराणां मध्ये (अमुक) नाम्नि संवत्सरे श्रीसूर्ये (अमुक) अयने (अमुक) ऋतौ (अमुक) मासे (अमुक) पक्षे (अमुक) तिथौ (अमुक) वासरे (अमुक) राशिस्थिते श्रीसूर्ये (अमुक) राशिस्थिते देवगुरौ (अमुक) राशिस्थिते चन्द्रमसि अन्येषु शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं ग्रहगणविशेषेण विशिष्टान्वितायां शुभपुण्यतिथौ (अमुक) गोत्रः (अमुक) प्रवरः सपत्नीकः पुत्रादिपरिवारसहितः (अमुक) शर्मा/वर्मा/गुप्तोऽहं सकलपापक्षयपूर्वकं श्रीपरमेश्वरप्रीतये (अमुक) कर्म करिष्ये ।

(आ) प्रायश्चित्तगोदानम्

१. गोपूजनम्

**ॐ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्यः एव च ।**

**नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ।**

**ॐ इरावती धेनुमतीहि भूतꣳसूयवसिनीमनवेदशस्या ।**

**व्यस्कब्भ्ना रोदसीविष्णवेतेदाधर्त्थपृथिवीमभितोमयूखैः स्वाहा ॥**

इति मन्त्रद्वयेन गां त्रिः सम्पूज्य ।

२. ब्राह्मणपूजनम्

**ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च ।**

**हिरण्ययेन सविता रथेना देवो याति भुवनानिपश्यन् ॥**

इति मन्त्रेणं ब्राह्मणं सम्पूजयेत् ॥

३. तर्पणम्/अभिषेकञ्च

ततः कुशलजेन गामभ्युक्ष्य गोपुच्छं, पवित्रमूलं गृहीत्वा पूर्वं तर्पयित्वा पश्चात् स्वशिरसि अभिषिञ्चेदनेन मन्त्रेण-

**ॐ मनो मे तर्प्पयत वाचम्मे तर्प्पयत प्राणम्मे तर्प्पयत चक्षुर्म्मे तर्प्पयत श्श्रोत्रम्मे तर्प्पयतात्मानम्मे तर्प्पयत प्रजाम्मे तर्प्पयत पशून्मे तर्प्पयत गणान्मे तर्प्पयत गणा मे मा वितृषन् ॥**

४. **सङ्कल्पः**

**ततः कुशादिसहितं गोपुच्छमादाय**

हरिः ॐ तत्सत् ३, ॐ विष्णुः ३, अद्येह श्रीमद्भगवतो महापुराणपुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकलजगतः सृष्टिकारिणो ब्रह्मणो द्वितीये परार्धे श्रीश्वेतवाराहकल्पे प्रह्लादाधिपत्ये मनौ सप्तमे वैवस्वतमन्वन्तरे सत्यत्रेताद्वापरान्ते बौद्धावतारे अष्टाविंशतितमे कलियुगे तस्य प्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्ते गङ्गादेव्या उत्तरदिग्भागे हिमाचलस्य दक्षिणपार्श्वे नेपालदेशे पाशुपतक्षेत्रे पशुपतेः गुह्यकाल्याश्च (अमुक) दिग्भागे (अमुक) नगरे, ग्रामे वा इह पुण्यभूमौ षष्टिसंवत्सराणां मध्ये (अमुक) नाम्नि संवत्सरे श्रीसूर्ये (अमुक) अयने (अमुक) ऋतौ (अमुक) मासे (अमुक) पक्षे (अमुक) तिथौ (अमुक) वासरे (अमुक) राशिस्थिते श्रीसूर्ये (अमुक) राशिस्थिते देवगुरौ (अमुक) राशिस्थिते चन्द्रमसि अन्येषु शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं ग्रहगणविशेषेण विशिष्टान्वितायां शुभपुण्यतिथौ अद्येह ...... गोत्रस्य ..... प्रवरस्य ...... मम अस्मिन् ...... कर्मणि कायिक-वाचिक-मानसिक-सांसर्गिक-चतुर्विध-पापक्षयपूर्वकम् आध्यात्मिक-आधिदैविक-आधिभौतिक-त्रिविधतापोपशान्ति-सकलदुःखाशेष-निवृत्तिपूर्वकं सर्वविधकल्याणार्थं पूर्वदिने भक्ष्याभक्ष्य-स्पृश्यास्पृश्य-चोष्याचोष्यादि-सकलप्रत्यवायपरिहारपूर्वकं कर्माधिकारार्थं देहशुद्ध्यर्थञ्च इमां गां तत्प्रत्याम्नायीभूतं व्यवहारोपकल्पितं द्रव्यं लोष्टादिकं वा रूद्रदैवतं (विष्णुदैवतं वा) अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय प्रायश्चित्तगोदानत्वेन तुभ्यमहं सम्प्रददे । (ब्राह्मणश्च ॐ स्वस्तीत्युक्त्वा)

५. प्रार्थना

हस्ते पुष्पादीन्यादाय

**ॐ कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**
**तीर्थदेवमयी यस्मात् तस्माच्छान्तिं प्रयच्छ मे ॥**
**गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।**
**गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥**
**पूजितासि वशिष्ठेन विश्वामित्रेण धीमता ।**
**सुरभि हर मे पापं यन्मया दुष्कतं कृतम् ॥**

इत्यादिभिर्गां प्रार्थयेत् ।

६. ततो दानप्रतिष्ठा

गोदानदशांशद्रव्यम् एकस्मिन् पात्रे संस्थाप्य पूजयेत्

**ॐ स्वर्णघर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णशुक्रः स्वाहा**

**स्वर्ण ज्योतिः स्वाहा स्वर्ण सूर्यः स्वाहा ॥**

दानप्रतिष्ठाद्रव्याय नमः इति मन्त्रेण सम्पूज्य कुशादिसहितं दानप्रतिष्ठाद्रव्यमादाय

**ॐ अद्य कृतैतत् सर्वप्रायश्चित्तनिमित्तकगोदानकर्मणः (गोप्रत्याम्नायीभूतद्रव्यदानकर्मणः) प्रतिष्ठासिद्ध्यर्थं इदं दानप्रतिष्ठाद्रव्यं रौप्यखण्डं चन्द्रदैवतं सुपूजिताय अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं संप्रददे ।**

७. ततः प्रदक्षिणा

**ॐ यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**तानि तानि प्रणश्यन्तु प्रदक्षिणं पदे पदे ॥**

इति मन्त्रेण गां त्रिः प्रदक्षिणां कृत्वा ।

८. ततो ब्राह्मणः स्वस्तीत्युक्त्वा अनेन मन्त्रेण यजमानमभिषिञ्चेत्

तत्र मन्त्रः

**ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।**

**पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा । इति ।**

**ॐ द्यौः शान्तिरन्तरिक्षम्...** । इति च पठेत्

॥ इति प्रायश्चित्तगोदानम् ॥

### (ख) सङ्क्षिप्तयज्ञोपवीतधारणविधिः

आचम्य प्राणानायम्य यज्ञोपवीतं प्रक्षाल्य सङ्कल्पं कुर्यात् -

ॐ अद्येत्यादि-मम श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थं (अमुक) कर्माङ्गत्वेन नूतनयज्ञोपवीतधारणमहं करिष्ये । इति सङ्कल्प्य यज्ञोपवीतानि करसम्पुटे धारयित्वा दशवारं गायत्रीमन्त्रैरभिमन्त्रयेत् ।

**ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।**

**आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥**

**यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥**

इति मन्त्रेणैकं यज्ञोपवीतं दक्षिणहस्तेन धारयित्वा पुनराचम्य अनेनैव मन्त्रेण द्वितीयं यज्ञोपवीतं धारयेत् । प्रतियज्ञोपवीतधारणान्ते आचमनं कुर्यात् ।

**ॐ एतावद्दिनपर्यन्तं ब्रह्मत्वं धारितं मया ।**

**जीर्णत्वात्तत्परित्यागो गच्छ सूत्र यथासुखम् ॥**

इति मन्त्रेण जीर्णं यज्ञोपवीतं शिरोमार्गेण निष्कास्य क्वचित्पवित्रस्थले भूमौ त्यजेत् । यज्ञोपवीतधारणानन्तरं यथाशक्ति गायत्रीं जपेत् (दशवारं तु अवश्यं जपेत्) ।

**'अर्पणम्-** अनेन नूतनयज्ञोपवीतधारणार्थे कृतेन यथाशक्ति गायत्रीजपाख्येन कर्मणा श्रीसूर्यनारायणः प्रीयतां न मम । ॐ तत्सत् ब्रह्मार्पणमस्तु ।

**॥ इति सङ्क्षिप्तयज्ञोपवीतधारणविधिः ॥**

### शब्दार्थाः

| | | |
|---|---|---|
| यज्ञोपवीतधारणविधिः | = | जनै लगाउने विधि |
| नूतनम् | = | नयाँ |
| जीर्णः | = | पुरानो |

### अभ्यासः

**अधोलिखितानां प्रश्नानामुत्तराणि लिखत**

(क) प्रतिज्ञासङ्कल्पवाक्यस्वरूपं लिखत ।

(ख) सङ्कल्पवाक्ये संयोजनीयाः विषयाः के ?

(ग) ----गोत्रः प्रवरः सपत्नीकः ---- शर्मा/वर्मा गुप्तः/अहं सकलपापक्षयपूर्वकं ---- कर्म करिष्ये । इत्यत्र आत्मन एव परिचयं प्रपूर्य पूर्णं सङ्कल्पवाक्यं रचयत ।

(घ) सङ्कल्पः कदा क्रियते ?

(ङ) माघशुक्लपञ्चमीं तिथिमनुसृत्य प्रायश्चित्तसङ्कल्पः लेखनीयः ।

(च) यज्ञोपवीतधारणविधिं सङ्क्षिप्तरूपेणोल्लिखत ।

(छ) यज्ञोपवीतधारणस्य प्रतिज्ञासङ्कल्पवाक्यं लिखत ।

(ज) यज्ञोपवीतधारणमन्त्रः कः ?

(झ) जीर्णयज्ञोपवीतनिष्कासनविधिं समन्त्रं लिखत ।

# देवपूजाविधिः

## (क) पञ्चगव्यनिर्माणविधिः[1]

एकं पवित्रं ताम्रपात्रमादाय तत्रैव

**ॐ तत्सवितु०** । इति मन्त्रेण गोमूत्रं क्षिपेत् ।

**ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

इति मन्त्रेण गोमयं क्षिपेत् ।

**ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।**

**भवा वाजस्य सङ्गथे ॥**

इति मन्त्रेण दुग्धं क्षिपेत् ।

**ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ।**

**सुरभिनो मुखाकरत्प्रणऽआयूꣳषि तारिषत् ॥**

इति मन्त्रेण दधि क्षिपेत् ।

**ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टन्देवयजनमसि ॥**

इति मन्त्रेण घृतं क्षिपेत् ।

**ॐ देवस्य त्वा सवितुःप्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।**

**अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्याञ्जुष्टं गृह्णामि ॥**

इति मन्त्रेण कुशोदकं प्रक्षिप्य कुशदूर्वादिभिः सर्वमेकत्र सम्मेल्य ।

'ॐ' इति प्रणवेन सप्तवारमभिमन्त्र्य तेनैव मन्त्रेण पिबेत्

अथवा

**ॐ यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ।**

**प्राशनात्पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् ।** इत्यनेन प्राशयेत् ।

१. गहुँत मन्त्रने विधि ।

(ख) स्वस्तिवाचनमन्त्राः

श्रीमन्महागणाधिपतये नमः । लक्ष्मीनारायणाभ्यां नमः । उमामहेश्वराभ्यां नमः । वणीहिरण्यगर्भाभ्यां नमः । शचीपुरन्दराभ्यां नमः । मातृपितृचरणकमलेभ्यो नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः ।

ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
अभीप्सितार्थसिद्धयर्थं पूजितो यः सुरासुरैः ।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥

शुक्लयजुर्वेदीयस्वस्तिवाचनमन्त्राः

ॐ आनो भद्द्राः क्क्रतवो यन्तुव्विश्श्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥
देवानोयथा सदमिद्वृधेऽअसन्नप्प्रायुवोरक्क्षितारोदिवेदिवे ॥१॥
देवानाम्भद्द्रासुमतिर्ऋजूयतान्देवानाᳬ रातिरभिनोनिवर्त्तताम् ॥
देवानाᳬ सक्ख्यमुपसेदिमाव्वयन्देवानऽआयुः प्प्रतिरन्तुजीवसे ॥२॥
तान्पूर्व्वयानिविदाहूमहेव्वयम्भगम्मित्रमदितिन्दक्क्षमस्रिधम् ॥
अर्ध्यमणंव्वरुणᳬ सोममश्विनासरस्वतीनः सुभगामयस्क्करत् ॥३॥
तन्नोव्वातोमयोभुव्वातुभेषजन्तन्मातापृथिवीतत्त्पिताद्यौः ॥

तद्द्ग्रावाणꣳसोमसुतोमयोभुवस्तदश्श्विनाश्रृणुतन्धिष्ण्ण्यायुवम् ॥४॥
तमीशानञ्जगतस्तस्त्थुषस्प्पतिन्धियञ्जिन्न्वमवसेहूमहेव्वयम् ॥
पूषानोयथाव्वेदसामसद्द्वृधेरक्षितापायुरदब्धꣳस्वस्तये ॥५॥
स्वस्तिनऽइन्द्रोव्वृद्धश्श्रवाꣳस्वस्तिनः पूषाव्विश्श्ववेदाꣳ ॥
स्वस्तिनस्ताक्क्ष्योऽअरिष्टनेमिꣳस्वस्तिनोबृहस्प्पतिर्द्दधातु ॥६॥
पृषदश्श्वामरुतꣳपृश्निमातरꣳशुभँय्यावानोव्विदथेषुजग्ग्मयꣳ ॥
अग्निजिह्वामनवꣳसूरचक्षसोव्विश्श्वेनोदेवाऽअवसागमन्निह ॥७॥
भद्द्रङ्कर्णेभिꣳश्रृणुयामदेवाभद्द्रम्पश्श्येमाक्षभिर्य्यजत्राꣳ ॥
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्व्यशेमहिदेवहितंय्यदायुः ॥८॥
शतमिन्नुशरदोऽअन्तिदेवायत्रानश्च्चक्क्राजरसन्तनूनाम् ॥
पुत्त्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्ग्गन्तोꣳ ॥९॥
अदितिर्द्द्यौरदितिरन्तरिक्क्षमदितिर्म्मातासपितासपुत्त्रः ॥
व्विश्श्वेदेवाऽअदितिꣳपञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्त्वम् ॥ १० ॥
द्यौःशान्तिरन्तरिक्क्षꣳशान्तिः पृथिवीशान्तिरापꣳशान्तिरोषधयꣳशान्तिः ॥
व्वनस्प्पतयꣳशान्तिर्व्विश्श्वेदेवाःशान्तिर्ब्रह्ममशान्तिꣳसर्व्वꣳशान्तिꣳ
शान्तिरेवशान्तिꣳसामाशान्तिरेधि ॥ ११ ॥
यतोयतꣳसमीहसेततोनोऽअभयङ्कुरु ॥
शन्नः कुरुप्प्रजाब्भ्योभयन्नꣳपशुब्भ्यः ॥ १२ ॥

॥ सुशान्तिर्भवतु ॥

## (ग) कर्मपात्रनिर्माणम्

### परिचय

हाम्रो कर्मकाण्डमा नित्य, नैमित्तिक, काम्य जे-जति कर्म गरिन्छन्, ती हरेक कर्ममा एउटा कर्मपात्र बनाउनुपर्दछ । अर्थात् तामाको थाली आदि कुनै पवित्र पात्रमा मन्त्रपूर्वक कुशका पवित्र र कुशका टुक्राहरू जल, चन्दन, अक्षता, जौ, तिल, फूलहरू हालेर जो बनाइन्छ, त्यसलाई कर्मपात्र भनिन्छ । त्यस कर्ममा सङ्कल्प गर्नुपर्दा त्यसबाट कुश, जल लिएर गरिन्छ र त्यो कर्ममा कतै जलको आवश्यकता पर्दा पनि त्यसैबाट जल लिइन्छ ।

### (अ) पवित्रच्छेदनं निर्माणञ्च

अप्रशीर्णाग्रौ द्वौ कुशौ गृहीत्वा प्रादेशमात्रं परिमाय तयोरुपरि त्रीणि कुशतरुणानि तिर्यङ् निधाय पवित्रमूलेन पवित्रमावेष्ट्य द्वयोर्मूलाग्रे पवित्रमूलं च दक्षिणहस्तेनादाय पवित्रं च वामहस्तेन गृहीत्वा प्रच्छिद्य पवित्रं च प्रदक्षिणं वारद्वयमावेष्टय ग्रन्थिं कुर्यात् ।

### (आ) कर्मपात्रनिर्माणार्थमावश्यकान्युपकरणानि

कर्मपात्रकरणार्था ताम्रस्थाली एका । कुशपवित्रम् । कुशखण्डाः । जलम् । चन्दनम् । सिन्दूरम् । अक्षताः। यवाः । तिलाः । पुष्पाणि चेति ।

### (इ) कर्मपात्रनिर्माणम्

स्वस्य दक्षिणे ताम्रपात्रं निधाय तत्र -

**ॐ यद्देवा देवहेडनन्देवासश्चकृमा वयम् ।**
**अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥**
**यदि दिवा यदि नक्तमेनाꣳसि चकृमा वयम् ।**
**वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥**
**यदिजाग्रद्यदिस्वप्नऽएनाꣳसि चकृमा वयम् ।**
**सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥**

इति देवानावाह्य ।

तत्र पवित्रेस्थ इति मन्त्रेण पवित्रं क्षिपेत् -

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण**

**पवित्रेण सूर्यस्य रश्मिभिः ॥**

**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥**

शन्नो देवीरिति जलं क्षिपेत् -

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ।**

**शं योरभि स्रवन्तु नः ॥**

गन्धद्वारामिति चन्दनं क्षिपेत् -

**ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

अक्षन्नमीमदन्तेत्यक्षतान् क्षिपेत् -

**ॐ अक्षन्नमीमदन्तह्यव प्रियाऽअधूषत ॥**

**अस्तोषत स्वभानवो विप्रा नविष्ठयामती योजान्विद्र ते हरी ॥**

यवोसीति यवान् क्षिपेत् -

**ॐ यवोसि यवयास्मद्द्वेषो यवयारातीर्दिवे त्वान्तरिक्षाय त्वा**

**पृथिव्यै त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥**

तिलोसीति तिलान् क्षिपेत् -

**ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः ॥**

**प्रत्क्नमद्भिः पृक्तः स्वधया पितॄल्लोँकान् प्रिणाहि नः ॥**

श्रीश्चते इति पुष्पं क्षिपेत् -

**ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥**

ततः कुशत्रयसहितं कर्मपात्रोदकमादाय -

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥**

**ॐ पुण्डरीकाक्षः पुनातु -३ ।**

इति पूजाद्रव्याणि आत्मानं च सिञ्चेत् । इति

## (घ) अर्घ्यस्थापनम्

### परिचय

जुनसुकै देवताको पूजा गर्दा पनि प्रायः अर्घ्यस्थापना गरिन्छ । अर्घ्यबिनाको पूजा अङ्गहीन मानिएको छ । अर्घ्यस्थापनाको क्रममा अर्घ्यपात्रमा जल, दूध, दही, कुशका टुक्रा, अक्षता, जौ, तिल, सस्र्यूँ यति आठ वस्तु र केरा दूवोसमेत हालेर पूजा गर्ने विधान छ । यसरी पूजा गरेको अर्घ्यको पूजाविधानमा ठूलो महिमा छ । यसैलाई अष्टाङ्गयुक्त अर्घ्य भनिन्छ । देवपूजाको स्नान कर्ममा यही प्रयोग गरिन्छ र कर्मको अन्त्यमा कामनापूर्तिको रूपमा शेष अर्घ्य समर्पण गरिन्छ ।

### (अ) अर्घ्यस्थापनार्थमावश्यकान्युपकरणानि

अर्घ्यपात्रम् । त्रिपादिका । जलम् । क्षीरम् । दधि । कुशाग्राणि । अक्षताः । यवाः । तिलाः । सर्षपाः । दूर्वाङ्कुराणि । चन्दनम् । पुष्पाणि । सिन्दूरम् । आभीरकम् ॥

### (आ) अर्घ्यस्थापनम्

**आपः क्षीरकुशाग्राणि दध्यक्षततिलास्तथा ।**

**यवसिद्धार्थकश्चैव अष्टाङ्गो ह्यर्घ उच्यते ।**

स्वस्य दक्षिणे भागे पिष्टातकेन त्रिकोणं षट्कोणं वा विलिख्य तत्र त्रिपादिकां निधाय तस्योपरि अर्घ्यपात्रं संस्थाप्य तस्मिन् पात्रे-जलम्, क्षीरम्, दधि, कुशाग्राणि, अक्षताः, तिलान्, यवान्, सर्षपान्, दूर्वाङ्कुराणि च प्रक्षिप्य गन्धपुष्पादिभिः सम्पूजयेत्

१. **द्वादशकलात्मने सूर्यमण्डलाय नमः ।**

२. **षोडशकलात्मने चन्द्रमण्डलाय नमः ।**

३. **दशकलात्मने वह्निमण्डलाय नमः ।**

४. **ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ।**
**नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥**

### इति संपूज्य

तत्रैवाङ्कुशमुद्रया सूर्यमण्डलाद् गङ्गादिनदीरावाहय धेनुमुद्रयाऽमृतीकृत्य मत्स्यमुद्रयाऽऽच्छाद्य तत्रस्थजलेन पूजासामग्रीम् आत्मानं च प्रोक्षेत् ।

। इति ।

## शब्दार्थाः

| | | |
|---|---|---|
| पञ्चगव्यनिर्माणविधिः | = | पञ्चगव्य बनाउने विधि |
| गोमूत्रम् | = | गाईको गहुँत (मूत्र) |
| गोमयम् | = | गाईको गोबर |
| दुग्धम् | = | दुध |
| दधि | = | दहि |
| प्राशनम् | = | खानु |
| पवित्रनिमार्णम् | = | पवित्र बनाउने विधि |
| द्रव्याणि | = | पूजाका सामानहरू |
| आत्मानम् | = | आफूलाई |
| पिष्टातकेन | = | पिठो आदिले |
| पञ्चगव्यम् | = | गाईको गहुँत, गोबर, दुध, दही र घिउबाट बनेको |

**आवश्यक सामग्रीहरू**

कर्मपात्र- जौ, तिल, कुश, चन्दन, अक्षता, फूल, जल, तामाको भाँडो आदि ।

अर्घ्य - जल, जौ, तिल, कुश (चन्दन र फूल), अक्षता दुबो, सर्स्यूँ, दही, दुध आदि ।

## अभ्यासः

१. अधोलिखितानां प्रश्नामुत्तराणि विलिखत

(क) समन्त्रप्रतीकं कर्मपात्रनिर्माणविधिं लिखत ।

(ख) अर्घ्यपात्रे कानि द्रव्याणि आवश्यकानि भवन्ति ?

(ग) समन्त्रप्रतीकं पञ्चगव्यनिर्माणविधिं लिखित ।

(ख) कर्मपात्रे यवतिलस्थापनमन्त्रौ समग्रौ लिखत ।

(ग) पञ्चगव्यनिर्माणार्थम् आवश्यकानि वस्तूनि कानि ?

(घ) पञ्चगव्यप्राशनमन्त्रः कः ?

(ङ) पञ्चगव्यं 'ॐ' इति प्रणवेन कतिवारमभिमन्त्र्यते ?

(च) गणेशस्य द्वादशनामानि कानि ? श्लोकानुसारेण उत्तरयत ।

(छ) स्वस्तिवाचनस्य वैदिकमन्त्राः कति सन्ति ? प्रतीकमात्रं लिखत ।

(ज) कर्मपात्रनिर्माणान्ते सेचनमन्त्रः कः ?

(झ) अर्घ्यपात्रनिर्माणान्ते प्रदर्शनीयानां मुद्राणां नामानि लिखत ।

**प्रयोगः**

पवित्रच्छेदनं तन्निर्माणप्रकारञ्च प्रदर्श्य तद्विधिं स्वकीयया भाषया प्रदर्शयत ।

## २. परस्परं मेलयत

| | |
|---|---|
| (क) द्वादशकलात्मने | वह्निमण्डलाय नमः । |
| (ख) षोडशकलात्मने | सूर्यमण्डलाय नमः । |
| (ग) दशकलात्मने | चन्द्रमण्डलाय नमः । |
| | भौममण्डलाय नमः । |

# पञ्चायतनदेवतापूजाविधिः

## परिचय

सनातन हिन्दु समाजले सबैलाई सम्मान गर्ने भएकाले प्रत्येक दिन बिहान पञ्चायतन देवता अर्थात् गणेश, सूर्य, देवी, शिव र विष्णुलाई पूजन गर्ने परम्परा अनादिकालदेखि चलिआएको छ । सो कार्य शास्त्रीय रूपले अगाडि बढोस् भनेर यहाँ पञ्चायतन देवताको स्थान र पूजन प्रकार बताइएको छ । आफूले जुन पञ्चायतन देवता पूजा गर्ने हो, सो देवता प्रधान मानी शास्त्रीय नियमानुसार राख्नुपर्छ । अन्यथा हानि हुन सक्छ । यहाँ प्रत्येक पञ्चायतन देवताको स्थापनाक्रम र विष्णुपञ्चायतन देवता पूजाविधि बताइएको छ । यसैलाई आधार मानेर अन्य पञ्चायतन देवताको पूजा गर्नुपर्छ ।

(क) पञ्चायतनदेवतास्थापनक्रमः

(अ) विष्णुपञ्चायतनम्

यदा तु मध्ये गोविन्दमैशान्यां शङ्करं यजेत्  
आग्नेय्यां गणनाथं च नैर्ऋत्यां तपनं तथा ॥  
वायव्यामम्बिकाञ्चैव यजेन्नित्यं समाहितः ॥ - आह्निकम्



(खा) शिवपञ्चायतनम्

यदा तु शङ्करं मध्ये ऐशान्यां श्रीपतिं यजेत् ।
आग्नेय्यां च तथा हंसं नैर्ऋत्यां पार्वतीसुतम् ॥
वायव्यां च सदा पूज्या भवानी भक्तवत्सला ॥ - आह्निकम्




(इ) गणेशपञ्चायतनम्

हेरम्बं तु यदा मध्ये ऐशान्यामच्युतं यजेत् ।
आग्नेय्यां पञ्चवक्त्रं तु नैर्ऋत्यां द्युमणिं यजेत् ॥
वायव्यामम्बिकाञ्चैव यजेन्नित्यमतन्द्रितः ॥ - आह्निकम्



(ई) सूर्यपञ्चायतनम्

सहस्रांशुर्यदा मध्ये ऐशान्यां पार्वतीपतिम् ।
आग्नेय्यामेकदन्तं च नैर्ऋत्यामच्युतं तथा ॥
वायव्यां पूजयेद्देवीं भोगमोक्षैकभूमिकाम् ॥ - आह्निकम्




(उ) देवीपञ्चायतनम्

भवानीं तु यदा मध्ये ऐशान्यां माधवं यजेत् ।
आग्नेय्यां पार्वतीनाथं नैर्ऋत्यां गणनायकम् ॥
प्रद्योतनं तु वायव्यामाचार्यस्तु प्रपूजयेत् ॥ - आह्निकम्



### (ख) पञ्चायतनदेवतापूजाविधिः

तत्रादौ शौचस्नानसन्ध्यादिकं समाप्य शुद्धवस्त्रं परिधाय पूजास्थानमागत्य पवित्राऽसन उपविश्य पवित्रधारणं कृत्वा दीपं प्रज्वाल्य, आचम्य, कर्मपात्रं निर्माय, अर्घ्यस्थापनं कृत्वा गन्धाक्षतपुष्पादिभिः दीपं, कलशं च यथाविधि सम्पूज्य पश्चात् स्वपञ्चायतनं क्रमानुसारेण पूजयेत् । यथा -

### (ग) तत्रादौ विष्णुपञ्चायतनपूजाविधिः

**१. आदौ ध्यानम् -**

विष्णोर्ध्यानम् -

**उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं,**
**चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम् ।**
**कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभै-**
**र्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ॥**

ध्यानं समर्पयामि ॐ विष्णवे नमः ॥

शिवस्य ध्यानम् -

**ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं,**
**रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।**
**पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं,**
**विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥**

ध्यानं समर्पयामि ॐ शिवाय नमः ।

गणेशस्य ध्यानम् -

**खर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं,**
**प्रस्यन्दन्मदगन्धलुब्धमधुपव्यालोलगण्डस्थलम् ।**
**दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरं,**
**वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम् ॥**

ध्यानं समर्पयामि ॐ श्रीगणपतये नमः ।

सूर्यस्य ध्यानम् -

रक्ताम्बुजासनमशेषगुणैकसिन्धुं,

भानुं समस्तजगतामधिपं भजामि ।

पद्मद्वयाभयवरान् दधतं कराब्जै-

र्माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम् ॥

ध्यानं समर्पयामि ॐ श्रीसूर्याय नमः ।

दुर्गाया ध्यानम् -

सिंहस्था शशिशेखरा मरकतप्रख्यैश्चतुर्भिर्भुजैः

शङ्खं चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता ।

आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीरणन्नूपुरा

दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लसत्कुण्डला ॥

ध्यानं समर्पयामि ॐ श्रीदुर्गायै नमः ।

२. आवाहनम्

आगच्छन्तु सुरश्रेष्ठा भवन्त्वत्र स्थिरासने ।

यावत् पूजां करिष्यामि तावत् तिष्ठन्तु सन्निधौ ॥

ॐ सहस्रशीर्षापुरुषꣳसहस्राक्षःसहस्रपात् ॥

सभूमिꣳसर्व्वतस्पृत्त्वात्त्यतिष्ठद्दशाङ्गुलम् ॥

ॐ विष्णवे नमः, आवाहनार्थे पुष्पं समर्पयामि ।

ॐ शिवाय नमः, आवाहनार्थे पुष्पं समर्पयामि ।

ॐ गणेशाय नमः, आवाहनार्थे पुष्पं समर्पयामि ।

ॐ सूर्याय नमः, आवाहनार्थे पुष्पं समर्पयामि ।

ॐ दुर्गायै नमः, आवाहनार्थे पुष्पं समर्पयामि ।

३. आसनम्

**अनेकरत्नसंयुक्तं नानामणिगणान्वितम् ।**

**कार्तस्वरमयं दिव्यमासनं प्रतिगृह्यताम् ॥**

**ॐ पुरुषऽएवेदꣳसर्व्वंय्यद्भूतँय्यच्चभाव्व्यम् ॥**

**उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥**

ॐ विष्णवे नमः । आसनार्थे तुलसीदलं समर्पयामि । एवं क्रमेण ॐ शिवाय नमः । इति पूजयेत् ।

४. पाद्यम्

**गङ्गादिसर्वतीर्थेभ्य आनीतं तोयमुत्तमम् ।**

**पाद्यार्थं सम्प्रदास्यामि गृह्णन्तु परमेश्वराः ॥**

**ॐ एतावानस्यमहिमातोज्ज्यायाँश्च्चपूरुषः ॥**

**पादोस्यव्विश्श्वाभूतानित्रिपादस्यामृतन्दिवि ॥**

ॐ विष्णवे नमः, पादयोः पाद्यं समर्पयामि । एवं ॐ शिवा० ।

५. अर्घ्यम्

**गन्धपुष्पाक्षतैर्युक्तमर्घ्यं सम्पादितं मया ।**

**गृह्णन्त्वर्घ्यं महादेवाः प्रसन्नाश्च भवन्तु मे ॥**

**ॐ त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥**

**ततोव्विष्ष्वङ्व्व्यक्क्रामत्साशनानशनेऽअभि ॥**

ॐ विष्णवे नमः, हस्तयोरर्घ्यं समर्पयामि । एवं ॐ शिवा ० ।

६. आचमनम्

**कर्पूरेण सुगन्धेन वासितं स्वादु शीतलम् ।**

**तोयमाचमनीयार्थं गृह्णन्तु परमेश्वराः ॥**

**ॐ ततोव्विराडजायतव्विराजोऽअधिपूरुषः ॥**

**सजातोऽअत्त्यरिच्च्यतपश्च्चाद्भूमिमथोपुरः ॥**

ॐ विष्णवे नमः, आचमनीयं जलं समर्पयामि । एवं ॐ शिवा ० ।

७. स्नानम्

**मन्दाकिन्याः समानीतैः कर्पूरागरुवासितैः ।**

**स्नानं कुर्वन्तु देवेशा जलैरेभिः सुगन्धिभिः ॥**

**ॐ तस्म्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् ॥**

**पशूँस्ताँश्च्चक्क्रेव्वायव्व्यानारण्ण्याग्ग्राम्म्याश्च्चये ॥**

ॐ विष्णवे नमः, स्नानीयं जलं समर्पयामि । एवं ॐ शिवा ० ।

आचमनम् -

स्नानान्ते आचमनीयं जलं समर्पयामि ।

८. पञ्चामृतस्नानम्

**पयो दधि घृतं चैव मधु च शर्करान्वितम् ।**

**पञ्चामृतं मयाऽऽनीतं स्नानार्थं प्रतिगृह्यताम् ॥**

**ॐ पञ्चनद्यः सरस्वतीमपि यन्ति सस्रोतसः ।**

**सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥**

ॐ विष्णवे नमः, पञ्चामृतस्नानं समर्पयामि । एवं ॐ शिवा ० ।

९. गन्धोदकस्नानम्

**मलयाचलसम्भूतं चन्दनेन विमिश्रितम् ।**

**इदं गन्धोदकस्नानं कुङ्कुमाक्तं तु गृह्यताम् ॥**

ॐ विष्णवे नमः, गन्धोदकं समर्पयामि । एवं ॐ शिवा ० ।

१०. शुद्धोदकस्नानम्

**मलयाचलसम्भूतं चन्दनाऽगरुमिश्रितम् ।**

**सलिलं देवदेवेश ! शुद्धस्नानाय गृह्यताम् ॥**

ॐ विष्णवे नमः, शुद्धोदकस्नानं समर्पयामि । एवं ॐ शिवा ० ।

आचमनम् -

शुद्धोदकस्नानान्ते आचमनीयं जलं समर्पयामि ।

११. वस्त्रम्

**शीतवातोष्णसंत्राणे लोकलज्जानिवारणे ।**

**देहालङ्करणे वस्त्रे भवद्भ्यो वाससी शुभे ॥**

**ॐ तस्म्माद्यज्ज्ञात्त्सर्व्वहुतऽऋचः सामानिजज्ञिरे ॥**

**छन्दाᳪसिजज्ञिरेतस्म्माद्यजुस्तस्म्मादजायत ॥**

ॐ विष्णवे नमः, वस्त्रमुपवस्त्रं च समर्पयामि । एवं ॐ शिवा ० ।

आचमनम् -

वस्त्रोपवस्त्रान्ते आचमनीयं जलं समर्पयामि ।

१२. यज्ञोपवीतम्

**नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।**

**उपवीतं मया दत्तं गृह्णन्तु परमेश्वराः ॥**

**ॐ तस्म्मादश्श्वाऽअजायन्तयेकेचोभयादतः ॥**

**गावोहजज्ञिरेतस्म्मात्तस्म्माज्जाताऽअजावयः ॥**

ॐ विष्णवे नमः, यज्ञोपवीतं समर्पयामि । एवं ॐ शिवा ० ।

आचमनम् -

यज्ञोपवीतान्ते आचमनीयं जलं समर्पयामि ।

१३. चन्दनम्

**श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।**

**विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥**

**ॐ तँऽयज्ञम्बर्हिषिप्प्रौक्क्षन्न्पुरुषञ्जातऽमग्ग्रतः ॥**

**तेनदेवाऽअयजन्तसाद्ध्याऽऋषयश्च्चये ॥**

ॐ विष्णवे नमः, चन्दनानुलेपनं समर्पयामि । एवं ॐ शिवा ० ।

१४. पुष्पाणि पुष्पमाला च -

**माल्यादीनि सुगन्धीनि मालत्यादीनि भक्तितः ।**

मयाऽऽहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥

ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ॥

मुखं किमस्यासीत्किम्बाहू किमूरू पादाऽउच्येते ॥

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥

इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥

ॐ विष्णवे नमः, पुष्पाणि (पुष्पमालाम्) समर्पयामि । एवं ॐ शिवाय ० ।

१५. तुलसीदलम्

तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम् ।

भवमोक्षप्रदां रम्यामर्पयामि हरिप्रियाम् ॥

ॐ विष्णवे नमः, तुलसीदलं मञ्जरीं च समर्पयामि । एवं ॐ शिवा०।

१६. धूपः

वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।

आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

ॐ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ॥

ऊरू तदस्य यद्वैश्यः पद्भ्याꣳ शूद्रोऽअजायत ॥

ॐ विष्णवे नमः, धूपमाघ्रापयामि । एवं ॐ शिवा०।

१७. दीपः

साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।

दीपं गृह्णन्तु देवेशास्त्रैलोक्यतिमिरापहम् ॥

ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत ॥

श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥

ॐ विष्णवे नमः, दीपं दर्शयामि । एवं ॐ शिवा०।

१८. नैवेद्यम्

शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ।

आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥
ॐ नाभ्या॑ऽआसीद॒न्तरि॑क्ष ᳪ शीर्ष्णो द्यौः समवर्त्तत ॥
प॒द्भ्याम्भूमि॒र्दिशः॒ श्रोत्रा॒त्तथा॑ लो॒काँ २॥ऽअ॑कल्पयन् ॥
ॐ विष्णवे नमः, नैवेद्यं निवेदयामि । एवं ॐ शिवा०।

नैवेद्यान्ते ध्यानं समर्पयामि ।

उत्तरापोऽशनार्थं हस्तप्रक्षालनार्थं मुखप्रक्षालनार्थं च जलं समर्पयामि ।

आचमनीयम् -

ॐ यत्पुरु॑षं॒व्व्यद॑धुः कति॒धाव्व्य॑कल्पयन् ॥
मुख॒ङ्किम॑स्यासीत्त्किम्बा॒हूकिमूरूपादा॑ऽउच्च्येते ॥
ॐ विष्णवे नमः, आचमनीयम् समर्पयामि । एवं ॐ शिवा०।

१९. ऋतुफलम्

इदं फलं मया देव स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥
ॐ विष्णवे नमः, ऋतुफलानि समर्पयामि । एवं ॐ शिवा०।

२०. ताम्बूलम्

पूगीफलं महद् दिव्यं नागवल्लीदलैर्युतम् ।
एलालवङ्गसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥
ॐ यत्पुरुषेणह॒विषा॑देवा य॒ज्ञमत॑न्वत ॥
व्व॒स॒न्तो॒ऽस्यासीदाज्ज्यं॒ग्ग्रीष्म्मऽइ॒द्ध्मः श॒रद्ध॒विः ॥
ॐ विष्णवे नमः, मुखवासार्थे ताम्बूलं समर्पयामि । एवं ॐ शिवा०।

२१. दक्षिणा

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥
ॐ यत्पुरुषेणह॒विषा॑देवा य॒ज्ञमत॑न्वत ॥

व्वसन्तो॒ऽस्यासीदाज्ज्यङ्ग्रीष्ष्मऽइद्ध्मऽ॒शरद्धवि॒ऽ ॥

ॐ विष्णवे नमः, दक्षिणां समर्पयामि । एवं ॐ शिवा०।

२२. नीराजनम्

कदलीगर्भसम्भूतं कर्पूरं तु प्रदीपितम् ।

आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव ॥

ॐ सप्प्तास्यासन्परिधयस्त्रिऽसप्प्तसमिधः कृताऽ ॥

देवायद्यज्ज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥

ॐ अग्निज्ज्योतिज्ज्योतिरग्निः स्वाहा सूर्य्योज्ज्योतिज्ज्योतिः सूर्य्यः स्वाहा ।

अग्निर्वर्चोज्ज्योतिर्वर्चः स्वाहा सूर्य्योवर्चोज्ज्योतिर्वर्चः स्वाहा ॥

ज्ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा ॥

ॐ विष्णवे नमः, आरार्तिक्यं समर्पयामि । एवं ॐ शिवा०।

२३. प्रदक्षिणा

यानि कानि च पापानि जन्मान्तरकृतानि च ।

तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥

ॐ सप्प्तास्यासन्परिधयस्त्रिऽसप्प्तसमिधः कृताऽ ॥

देवायद्यज्ज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥

ॐ विष्णवे नमः, प्रदक्षिणां समर्पयामि । एवं ॐ शिवा०।

२४. मन्त्रपुष्पाञ्जलिः

श्रद्धया सिक्तया भक्त्या हार्दप्रेम्णा समर्पितः ।

मन्त्रपुष्पाञ्जलिश्चायं कृपया प्रतिगृह्यताम् ॥

नानासुगन्धिपुष्पाणि यथाकालोद्भवानि च ।

पुष्पाञ्जलिं मया दत्तं गृहाण परमेश्वरः ॥

ॐ यज्ञेनयज्ज्ञमयजन्तदेवास्तानिधर्म्माणिप्प्रथमान्यासन् ॥

तेहनाकम्महिमानःसचन्तयत्रपूर्व्वेसाद्ध्याऽसन्तिदेवाऽ ॥

ॐ विष्णवे नमः, मन्त्रपुष्पाञ्जलिं समर्पयामि । एवं ॐ शिवा०।

२५. नमस्कारः

**नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥**

**ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ॥**

**तेहनाकम्महिमान÷सचन्तयत्रपूर्व्वेसाद्ध्याःसन्तिदेवाः ॥**

ॐ विष्णवे नमः, प्रार्थनापूर्वकं नमस्कारान् समर्पयामि । एवं ॐ शिवा०।

२६. अर्घ्यनिवेदनम्

**गन्धपुष्पाक्षतैर्युक्तमर्घ्यं सम्पादितं मया ।**

**गृह्णन्त्वर्घ्यं महादेवाः प्रसन्नाश्च भवन्तु मे ॥**

**वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ।**

**अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ॥**

ॐ विष्णवे नमः अर्घ्यजलं समर्पयामि । एवं ॐ शिवा०।

शङ्खभ्रामणम् -

**शङ्खमध्ये स्थितं तोयं भ्रामितं केशवोपरि ।**

**अङ्गलग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति ॥**

ॐ विष्णवे नमः शङ्खजलं समर्पयामि । एवं ॐ शिवा०।

२७. क्षमापनम्

**मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ।**

**यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥**

**आवाहनं न जानामि न जानामि विसर्जनम् ।**

**पूजां चैव न जानामि क्षमस्व परमेश्वर ॥**

**अन्यथा शरणं नास्ति त्वमेव शरणं मम ।**

**तस्मात् कारुण्यभावेन रक्ष मां परमेश्वर ॥ इति ।**

**ॐ तत्सद् ब्रह्मार्पणमस्तु ।**

**ॐ विष्णवे नमः, ॐ विष्णवे नमः, ॐ विष्णवे नमः ।**

२८. अर्पणम्

हस्ते जलं गृहीत्वा ।

**अनेनाऽऽवाहनाऽऽसनपाद्यार्घाचमनीयस्नानवस्त्रोपवीतगन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूल-दक्षिणारार्तिक्यप्रदक्षिणामन्त्रपुष्पाञ्जलिरूपैः षोडशोपचारैरन्योपचारैश्च यथाज्ञानेन (यथामिलितोपचारद्रव्यैर्वा) कृतेनानेन पूजनकर्मणा विष्णुपञ्चायतनदेवाः प्रीयन्तां न मम । ॐ तत्सद्ब्रह्मार्पणमस्तु ॥**

२९. ततोऽच्युतस्मरणम्

**ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**

**हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥**

**ॐ अच्युताय नमः ॥ ॐ अच्युताय नमः ॥ ॐ अच्युताय नमः ॥**

३२. चरणामृतपानम्

**ॐ अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।**

**विष्णुपादोदकं पीत्वा पुनर्जन्म न विद्यते ॥**

ततो देवनिर्माल्येन शिरसि मार्जनम्-

**ॐ देवनिर्माल्यतोयेन योऽङ्गानि परिमार्जयेत् ।**

**आधयस्तस्य नश्यन्ति व्याधीनां तु कथैव का ॥**

॥ इति श्रीविष्णुपञ्चायतनपूजाप्रयोगः ॥

| शब्दार्थाः | | |
|---|---|---|
| पञ्चायतनदेवताः | = | गणेश, सूर्य, देवी, शिव र विष्णु गरी पाँच देवता |
| स्थापनाक्रमः | = | राख्ने क्रम |
| विष्णुपञ्चायतनम् | = | विष्णुप्रधान भएको पाञ्चायन देवता |
| शिवपञ्चायतनम् | = | शिवप्रधान भएको पाञ्चायन देवता |
| गणेशपञ्चायतनम् | = | गणेशप्रधान भएको पाञ्चायन देवता |
| सूर्यपञ्चायतनम् | = | सूर्यप्रधान भएको पाञ्चायन देवता |
| देवीपञ्चायतनम् | = | देवीप्रधान भएको पाञ्चायन देवता |

| | | |
|---|---|---|
| स्वपञ्चायतनम् | = | आफूले प्रधान मानेर पुजिने पाञ्चायन देवता |
| गन्धोदकस्नानम् | = | चन्दन मिसाएको जलले नुहाउनु |
| ऋतुफलम् | = | ऋतुअनुसारको फल |

**पञ्चायतन देवता पूजा सामग्री**

पूजाको भाँडा, चोखो जल, जौ, तिल, अक्षता, चन्दन, अबिर, केसरी, फूलमाला, पञ्चामृत, बेलपत्र, तुलसीपत्र, धूप, दीप, नैवेद्य, भेटी, कपूर, कुश, दुबो, दीयो, कलश, गणेश, सुपारी आदि ।

## अभ्यासः

### १. अधोलिखतानि श्रुत्वा उत्तरं दत्त लिखत च

(क) विष्णुपञ्चायतनदेवतास्थापनप्रकारः कः ?

(ख) गणेशपञ्चायतनदेवतास्थापनप्रकारं विलिखत ।

(ग) विष्णोर्ध्यानमन्त्रं समग्रं लिखत ।

(घ) शङ्खजलनिवेदनमन्त्रः कः ?

(ङ) चरणामृत-पानमन्त्रं लिखत ।

(च) पञ्चायतनदेवानां नामानि लिखत ।

(छ) भवतः परम्परागत इष्टो वा पञ्चायतनदेवः कः ?

(ज) विष्णुपञ्चायतनपूजाविधौ के के पदार्थाः आवश्यका भवन्ति ?

(झ) विष्णुपञ्चायतनपूजाप्रकारं पठित्वा स्वकीयपञ्चायतनदेवपूजाविधिं रचयत ।

### २. रिक्तस्थानं पूरयत

(क) शिवपञ्चायतनपूजायां वायव्यकोणे ....... स्थाप्यते (गणेशः, देवी, विष्णुः, सूर्यः)

(ख) सूर्यपञ्चायतनस्थापनक्रमे नैर्ऋत्यकोणे .... भवति । (विष्णुः, गणेशः, शिवः, देवी)

(ग) देवीपञ्चायतनपूजने मध्ये ..... स्थाप्यते । (विष्णुः, शिवः, गणेशः, सूर्यः, देवी)

(घ) नवभिस्तन्तुभिर्युक्तं ....... देवतामयम् ।
उपवीतं ......... गृह्णन्तु ............ ॥

(ङ) श्रीखण्डं चन्दनं ............ सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ! ......................... ॥

# रङ्गवल्लीरचना

## (क) रुद्राभिषेकार्था रङ्गवल्ली

**परिचय**

रेखी हाल्ने विधिलाई रङ्गवल्ली रचना भनिन्छ । रङ्गवल्ली रचना गर्नु अर्थात् रेखी हाल्नु एक प्रकारले आसनविशेषको कल्पना गर्नु हो । देवताको पूजाक्रममा शास्त्रमा बताएअनुसार आसनको ठुलो महत्त्व देखिन्छ । विशेष अथवा सामान्य जेजस्तो कर्म गरिन्छ, रेखी पनि सोहीअनुसारको हुन्छ । यसैले हाम्रो याज्ञिक परम्परामा विशेष अनुष्ठानहरूमा विशेष रूपको र सामान्य अनुष्ठानहरूमा सामान्य रेखी हाल्ने प्रचलन पाइन्छ । शिवजीको विशेष अनुष्ठान गरिँदा चतुर्लिङ्गतोभद्र, द्वादशलिङ्गतोभद्र रचना गर्ने (रेखीभित्र चार लिङ्ग अथवा बाह्र लिङ्ग लेखिन्छन्) तथा विष्णुको विशेष अनुष्ठानमा सर्वतोभद्र रचना गर्ने गरिन्छ । सोहीअनुसार रुद्राभिषेकलाई सामान्य कर्मको रूपमा लिई सामान्य रूपबाट नै यहाँ रङ्गवल्ली (रेखी) को स्वरूप दिइएको छ ।

### (अ) रुद्राभिषेकस्य रङ्गवल्लीरचना



(आ) सामान्यपूजायाः रङ्गवल्लीरचना




(ख) रुद्रीपाठे दिवसविचारः

रुद्रीपाठे शुभाशुभफलज्ञानाय तिथ्यनुसारेण गणनाक्रमो यथा-शुक्लप्रतिपदा १, शुक्लद्वितीया २, एवं क्रमेण पूर्णिमा १५, कृष्णप्रतिपदा १६, कृष्णद्वितीया १७, एवं क्रमेण अमावास्या ३०, तिथिगणनाक्रमो बोध्यः ।

शिववासफलम् (मेरुतन्त्रे) -

**[1]तिथिं च द्विगुणीकृत्य पञ्चभिश्च समन्वितम् ।**

**सप्तभिश्च हरेद्भागं शिववासफलं लभेत् ॥**

**एके कैलासवासः स्यात्[२(क)] द्वितीये गौरिसन्निधौ ।**

**तृतीये वृषभारूढः सभायां च चतुर्थके ॥**

**पञ्चमे भोजने चैव षष्ठे क्रीडारतस्तथा ।**

**श्मशानेऽद्रौ तथा शेषे[(ख)] शिववासफलं भवेत्[(ग)] ॥**

**कैलासे तु भवेत्सौख्यं गौर्यङ्के च सुखप्रदम्[(घ)] ।**

**वृषारूढे च श्रीप्राप्तिः[(ङ)] सभा सन्तापकारिणी[(च)] ॥**

**भोजने भोजनप्राप्तिः[(छ)] क्रीडा सन्तानहारिणी[(ज)] ।**

**श्मशाने मृत्युमाप्नोति शिववासफलं लभेत् ॥**

मेरुतन्त्रे शिववास फलसारिणी

| शुक्लपक्षः | शिववासः | फलम् | कृष्णपक्षः |
|---|---|---|---|
| १ | श्मशाने | मृत्युः | ७ |
| २ | गौरीसन्निधौ | शुभम् | १ |
| ३ | सभायाम् | सन्तापकारणम् | २ |
| ४ | क्रीडायाम् | सन्तानहानिः | ३ |
| ५ | कैलाशे | सुखम् | ४ |
| ६ | वृषे | श्रीप्राप्तिः | ५ |
| ७ | भोजने | भोजनप्राप्तिः | ६ |
| ८ | श्मशाने | मृत्युः | 0 |
| ९ | गौरीसन्निधौ | शुभम् | ८ ।३0 |
| १0 | सभायाम् | सन्तापकारणम् | ९ |

१ यथा गणनासूत्रम्
तिथि × २ + ५ ÷ ७ = शिववासः । कृष्णपक्षे तु- तिथि + १५ × २ + ५ ÷ ७ = शिववासो ज्ञेयः ।

२ (क) कैलासवासं च, इति पाठान्तरम् । (ख) सप्तमे प्रोक्तः, इति पा. । (ग) तथा, इति पा. ।
(घ) गौर्यान्तु सुखसम्पदः, इति पा. । (ङ) वृषभे च श्रियः प्राप्तिः, इति पा. । (च) सभायां तापकारिणी, इति पा. ।
(छ) भोजनं चैव, इति पा. । (ज) सन्तापहारिणी, इति पाठभेदः ।

| | | | |
|---|---|---|---|
| ११ | क्रीडायाम् | सन्तानहानिः | १० |
| १२ | कैलाशे | सुखम् | ११ |
| १३ | वृषे | श्रीप्राप्तिः | १२ |
| १४ | भोजने | भोजनप्राप्तिः | १३ |
| १५ | श्मशाने | मृत्युः | १४ |

## शब्दार्थाः

रङ्गवल्लीरचना = रेखी हाल्ने तरिका

आग्नेयः = पूर्व र दक्षिण बिचको कुनो

नैर्ऋत्यः = दक्षिण र पश्चिम बिचको कुनो

वायव्यः = पश्चिम र उत्तर बिचको कुनो

ईशानः = उत्तर र पूर्व बिचको कुनो

## अभ्यासः

१. अधोलिखितानां प्रश्नानाम् उत्तरं वदत लिखत च

(क) रुद्राभिषेके रङ्गवल्लीरचना कथं क्रियते ? विलिख्य प्रदर्शयत ।

(ख) 'रङ्गवल्लीरचना' इति शब्देन किं ज्ञायते ?

(ग) तिथयः कति ? तासां गणनाक्रमः कः ? इति द्वयं समाधत्त ।

(घ) शिववासज्ञानाय कः श्लोकः पठ्यते ?

(ङ) कति शेषे प्राप्ते शिववासः सभायां भवति ? तत्फलञ्च किम् ?

(च) शुक्लपक्षस्य पञ्चम्यां तिथौ शिववासः कुत्र भवति ?

(छ) कैलासे शिववासे सति रुद्रीपाठः कर्तुं भवति न वा ?

(ज) कृष्णपक्षस्य चतुर्दश्यां शिववासः कुत्र ? फलञ्च किम् ?

(झ) सामान्यपूजायां कीदृशी रङ्गवल्ली रच्यते ?

## २. परस्परं सम्मेलयत

| | |
|---|---|
| एकशेषे शिववासः कैलासे | श्रीप्राप्तिः । |
| द्विशेषे शिववासः गौरिसन्निधौ | सन्तापकारिणी । |
| त्रिशेषे शिववासः वृषभारुढः | भोजनप्राप्तिः । |
| चतुश्शेषे शिववासः सभायां | सन्तानहारिणी । |
| पञ्चशेषे शिववासः भोजने | सौख्यम् । |
| षट्शेषे शिववासः क्रीडारतः | मृत्युः । |
| शून्यशेषे शिववासः श्मशाने | सुखप्रदम् । |
| | कीर्तिः । |

## ३. पृथक्कुरुत

गौर्यङ्के =

श्मशानेऽद्रौ =

तिथ्यनुसारेण =

## परिचय

हाम्रो वैदिक हिन्दु समाजमा चलेका कर्मकाण्ड अन्तर्गतको अतिप्रचलित र उत्कृष्ट कर्म हो रुद्राभिषेक । रुद्राभिषेक शान्तिक तथा पौष्टिक कर्म दुवैमा गर्ने गरिएको छ । शान्तिक कर्म भनेको ग्रहशान्ति वा दुःस्वप्नादि निवारणार्थ गरिने कार्य हो भने पौष्टिक धनधान्य, सन्तति वृद्धिविषयक कार्य हो । विशिष्ट धनधान्यसम्पन्न व्यक्तिले जुन भावनाले रुद्राभिषेक गर्दछ, एक सामान्य व्यक्तिले पनि उस्तै भावनाले गर्दछ । आर्थिक दृष्टिमा धनी र गरिबमा भिन्नता भए पनि भावनात्मक दृष्टिमा दुवै बराबरीमा आउन सक्छन् ।

भगवान् रुद्रको आराधना गर्ने क्रममा रुद्रीपाठका तीन रूप बताइएका छन् । अभिषेकात्मक, हवनात्मक र जपात्मक । जलधारापूर्वक रुद्रीपाठ गरिनेलाई अभिषेकात्मक, रुद्रीका मन्त्रपाठपूर्वक होम गर्दै गर्नेलाई हवनात्मक (यसलाई रुद्रहोम पनि भनिन्छ) र जलधारा पनि होम पनि नगरी केवल रुद्रीपाठ मात्र गरिनेलाई जपात्मक भनिन्छ । श्रद्धानुसार तीनै थरी कर्म एकै दिन गर्न सकिन्छ तर रुद्रीसँगै होम पनि जुराउनुपर्दछ ।

रुद्रीका पाँच भेद छन्- रुद्र, रुद्री, लघुरुद्री, महारुद्री र अतिरुद्री । एकावृत्ति रुद्रीपाठ गरिनेलाई रुद्र, त्यसको ११ गुणा अर्थात् ११ आवृत्तिलाई रुद्री अथवा रुद्रैकादशिनी, त्यसको ११ गुणा अर्थात् १२१ आवृत्तिलाई लघुरुद्री, त्यसको ११ गुणा अर्थात् १३३१ आवृत्तिलाई महारुद्री र त्यसको पनि ११ गुणा अर्थात् १४६४१ आवृत्तिलाई अतिरुद्री भनिन्छ ।

धर्म, अर्थ (धन), काम (सुख र सन्तान) र मोक्ष यी चारै पुरुषार्थको इच्छा गर्नेहरूले रुद्रीपाठद्वारा आशुतोष भगवान् रुद्रलाई प्रसन्न गराएर आफ्नो इच्छा पूर्ण गर्दछन् । अभिषेकात्मक रुद्रीपाठमा कामना विशेषले अभिषेक द्रव्य पनि भिन्नभिन्न बताइएको छ । वृष्टि कामना गर्ने र ज्वरोको प्रकोप शान्त गराउन इच्छा गर्नेहरूले जलधाराद्वारा, पशुधनको

इच्छा गर्नेले दहीको धाराद्वारा, पुत्रको इच्छा र प्रमेह रोग शान्ति गर्ने तथा दीर्घायु बनौं भन्ने इच्छा हुनेहरूले दूधको धाराद्वारा, पापनाश गर्ने र निरोगी बनौं भन्ने इच्छा गर्नेहरूले क्रमैले मह र घिउको धाराद्वारा, मोक्षको इच्छा हुनेले तीर्थजलको धाराद्वारा, शत्रुनाश गर्न इच्छुकले सर्स्यूँको तेलको धारा गरेर रुद्रीपाठपूर्वक रुद्राभिषेक गर्नु वा गराउनु भनिएको छ ।

जलधारा क्रममा तामा वा चाँदी वा पित्तलको जलहरीद्वारा गरिन्छ र अर्को गौरीगाईको सिङले जलधारा गर्नू भन्ने पनि छ र सोही अनुसार सिङले पनि जलधारा गरिन्छ ।

जुनसुकै कर्ममा पनि एउटा मुख्य वा प्रधान कर्म हुन्छ । अरू त्यसमा सहयोगीका रूपमा गरिने अङ्गकर्म हुन्छन् । यहाँ रुद्राभिषेक जलधारापूर्वक रुद्रीपाठ गर्नु मुख्य कर्म हुन्छ । अरू वरण, पुण्याहवाचन, दीप, कलश, गणेश पूजाहरू सबै अङ्ग कर्मका रूपमा हुन्छन् । सबै अङ्गकर्मले प्रधान कर्म रुद्राभिषेकलाई सहयोग गर्दछन् ।

रुद्रीपाठद्वारा तमोमूर्ति महारुद्र प्रसन्न हुनुहुन्छ । रुद्रकोप शान्त हुन्छ । जब रुद्र कुपित हुनुहुन्छ । त्यसबेला उहाँबाट एउटा कुनै त्यस्तो भयङ्कर कोपज्वाला निस्कन्छ र त्यो कोपज्वाला परमाणु रूप लिएर यसरी सर्वत्र व्याप्त भएर फैलिन्छ कि जो गगनमण्डल, वायुमण्डल, जल, स्थल, अन्न आदिमा सर्वत्र छरिएर रहन्छ । यसै गरी उहाँले प्रहार गर्नुभएका बाणहरू पनि सर्वत्र छरिएका हुन्छन् । यस्तो रुद्रको कोपज्वाला वा बाणको प्रचण्ड प्रहारमा तब मनुष्य वा पशुपक्षी कुनै पर्दछ भने त्यो कहिल्यै पनि कुशल, मङ्गलमय र स्वस्थ रहन सक्दैन । यस्तो प्रहारबाट बच्न भगवान् रुद्रलाई प्रसन्न गराउनुपर्दछ । रुद्रलाई प्रसन्न तुल्याउने सबैभन्दा उत्तम साधन रुद्रीपाठ नै हो । रुद्रीपाठद्वारा भगवान् रुद्र ज्यादै चाँडो प्रसन्न हुनुहुन्छ ।

अभिषेकात्मक रुद्रीलाई रुद्राभिषेक भनिन्छ । यसमा जलको धारा दिएर रुद्रीपाठ गरिन्छ । रुद्राभिषेक गर्दा यसै क्रमले प्रधान कर्म र अङ्ग कर्महरू गरिन्छन् ।

### (क) रुद्राभिषेकविधिः

**श्रीगणेशाय नमः । श्रीमङ्गलमूर्तये नमः ।**

**तत्रादौ मङ्गलाचरणम् -**

यजमानः पूर्वाभिमुखः स्वासन उपविश्य आचम्य प्राणानायम्य देवान्नमेत् ।

ॐ श्रीमन्महागणाधिपतये नमः । ॐ इष्टदेवताभ्यो नमः ।

ॐ कुलदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो नमः ।

ॐ सर्वेभ्यो देवेभ्यो नमः । ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः ।

ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।

लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ।

धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।

द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥

विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।

संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥

शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।

प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

अभीप्सितार्थसिद्धयर्थं पूजितो यः सुरासुरैः ।

सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥

॥ इति मङ्गलाचरणम् ॥

### (अ) वरणम्[1]

कर्मपात्रं कृत्वा - गन्धपुष्पाक्षतफलवस्त्रद्रव्यादियुतां वरणसामग्रीं सम्पाद्य यवकुशजलान्यादाय वरणसामग्रीं च हस्तेनादाय वरणसङ्कल्पं कुर्यात् ।

हरिः ॐ तत्सत् ३, ॐ विष्णुः ३, अद्येह श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकल जगतः सृष्टिकारिणो ब्रहमणो द्वितीये परार्धे श्रीश्वेतवाराहकल्पे प्रल्हादाधिपत्ये मनौ सप्तमे वैवस्वतमन्वन्तरे सत्यत्रेताद्वापरान्ते बौद्धावतारे अष्टाविंशतितमे कलियुगे तस्य प्रथमचरणे भूर्लोके जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गते गङ्गादेव्या उत्तरदिग्भागे

१. वरणको अर्थ हो - जुनसुकै आफूले गर्न लागेको कर्म छ, त्यस कर्मको सञ्चालनका निम्ति ब्राहमणलाई कुनै पदमा राखी कर्म गर्ने अधिकार दिनु । (रुद्राभिषेकमा पाठकको पदमा राखी रुद्रीपाठको अधिकार दिइन्छ) । यसरी वरण गर्दा - धोती, उपर्ना, गन्जी वा भोटो, पञ्चपात्र, आसनी, औंठी आदि आफूले जेजस्तो ब्राहमणलाई दिन सकिन्छ, ती सबै कुरा राखी 'यस काममा म तपाईंलाई यस पदमा राखी वरण गर्दछु' भनी सङ्कल्प पढिन्छ । पछि टीका लगाएर ती वस्तुहरू दिइन्छन् ।

हिमाचलस्य दक्षिणपार्श्वे नेपालदेशे पाशुपतक्षेत्रे पशुपतेः गुह्यकाल्याश्च (अमुक) दिग्भागे (अमुक) ग्रामे वा नगरे इह पुण्यभूमौ षष्टिसंवत्सराणां मध्ये (अमुक) नाम्नि संवत्सरे श्रीसूर्ये (अमुक) अयने (अमुक) ऋतौ (अमुक) मासे (अमुक) पक्षे (अमुक) तिथौ (अमुक) वासरे (अमुक) राशिस्थिते श्रीसूर्ये (अमुक) राशिस्थिते देवगुरौ (अमुक) राशिस्थिते चन्द्रमसि अन्येषु शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं ग्रहगणविशेषेण विशिष्टान्वितायां शुभपुण्यतिथौ (अमुक) गोत्रस्य (अमुक) प्रवरस्य (अमुक) शर्मणो मम (अमुकनाम्नो मम) सभार्यस्य सपुत्रपौत्रस्य सकुटुम्बस्यायुरारोग्यैश्वर्योत्तरोत्तरहर्षविजयोदयपूर्वकं दारिद्र्यदुःखदुर्भिक्ष्य-दौर्मनस्य दौर्भाग्योपसर्ग-महामारी-त्रासोल्कापात-निर्घातभूकम्पादि-सूचित-सकल-दोषोपशान्त्यर्थं दुःस्वप्न-सुस्वप्नता-वाप्तिपूर्वक-बालग्रहदशान्तर्दशागोचरदशादिसकलदोषोपशमनार्थं बाह्याभ्यन्तरज्वरातिसारापस्मारश्वासकासादिसमस्तरोगाणां झटितिनिवृत्तिपूर्वकमारोग्यतावाप्तये विशेषतः आध्यात्मिकाधिदैविकाधिभौतिकादितापत्रयोपशमनपूर्वकधर्मार्थकाममोक्षादिचतुर्विध-फलप्राप्तये श्रीपरमेश्वरसाम्बसदाशिवप्रीतये दीपगणेशकलशपूजनपूर्वकं श्रीसाम्बसदाशिवोपरि अविच्छिन्नजलधारया (दुग्धादि धारया वा) (अमुक) सङ्ख्याकब्राह्मणद्वारा (अमुक) रुद्राभिषेकं कर्तुं तथा श्रीमहाकालीमहालक्ष्मीमहासरस्वतीप्रीतये मार्कण्डेयपुराणान्तर्गत "सप्तशती" स्तोत्रस्य साङ्गोपाङ्ग (संपुटित) पाठं कर्तुं (अमुक) गोत्रम् (गोत्रान् वा) (अमुक) शर्माणं (शर्मणो वा) ब्राह्मणम् (ब्राह्मणान् वा) एभिश्चन्दनपुष्पाक्षतफलवस्त्रद्रव्यादिभिरहं वृणे ।

**ॐ वृतोऽस्मि (वृताः स्मः वा) इति प्रतिवचनम् ।**

**यथाविहितं कर्म कुरु (कुरुत वा) । करवाणि (करवामः वा) इति प्रतिवचनम् ।**

॥ इति ब्राह्मणवरणम् ॥

ततो हस्ते सर्षपाक्षतान् गृहीत्वा -

**ॐ अपसर्पन्तु ते भूता ये भूता भूमिमाश्रिताः ।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥**
**अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।**
**सर्वेषामविरोधेन शिवकर्म समारभे ॥**

इति पठन् देवयजनभूमौ सर्वत्र विकिरेत् । तत ईश्वरवन्दनेनात्मरक्षां कुर्यात् ।

तत्र क्रमः -

**ॐ ईश्वराय नमः इति पूर्वे । ॐ आग्नेयेश्वराय नमः आग्नेये ।**

**ॐ यमेश्वराय नमः दक्षिणे । ॐ निर्ऋतीश्वराय नमः नैर्ऋत्ये ।**

**ॐ वरुणेश्वराय नमः पश्चिमे । ॐ वायव्येश्वराय नमः वायव्ये ।**

**ॐ सोमेश्वराय नमः उत्तरे । ॐ ईशानेश्वराय नमः ईशाने ।**

**ॐ व्योमेश्वराय नमः ऊर्ध्वायाम् । ॐ अनन्तेश्वराय नमः भूमौ ।**

**ॐ सर्वेश्वराय नमः सर्वतः ।**

**"ॐ नमो भगवते रुद्राय" ।**

इति मन्त्रेण प्राणायामत्रयं कुर्यात् ।

तत्र पूरके ३६, कुम्भके १२, रेचके १२ इति मन्त्रसङ्ख्या ॥

### (आ) पुण्याहवाचनम्[1]

पुण्याहवाचनार्थं अविधुराँस्त्रिचतुरः पञ्च वा ब्राह्मणान् वृत्वा प्राङ्मुखो यजमानः कृताञ्जलिः-

हरि ॐ तत्सत् ३, ॐ विष्णुः ३, पूर्वसङ्कल्पसिद्धिरस्तु (अमुक) गोत्रस्य (अमुक) प्रवरस्य (अमुक) शर्मणो मम अभीष्टफलावाप्तये करिष्यमाण (अमुक) रुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः ! **ॐ पुण्याहं भवन्तो ब्रुवन्तु ३ ।** इति त्रिवारं पठेत् । ब्राह्मणाश्च **ॐ पुण्याहम् ३ ।** इति त्रिः पठेयुः ।

ततो ब्राह्मणाः -

**ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।**

**पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ।**

ततो यजमानः पूर्ववत्सङ्कल्पमुच्चार्य - (अमुक) रुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः ! **ॐ स्वस्ति भवन्तो ब्रुवन्तु ३ ।** (ब्राह्मणाश्च) **ॐ स्वस्ति ३ ।**

**ॐ स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।**

**स्वस्ति नस्ताक्ष्र्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥**

---

1: यजमानको अभ्युदय र समृद्धिका निमित्त पुण्याहवाचन कर्म गरिन्छ । यस कर्ममा ब्राह्मणलाई वस्त्र, द्रव्य, सुपारी, फल, दुबो आदि जो दिन सकिन्छ, त्यो दिइन्छ र ब्राह्मणहरूद्वारा मङ्गलमय अभ्युदयकारक मन्त्रहरू पढिन्छन् ।

यजमानः - पूर्ववत्सङ्कल्पमुच्चार्य- (अमुक) रुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः ! ॐ ऋद्धिं भवन्तो ब्रुवन्तु ३ । (ब्राह्मणाश्च) ॐ ऋद्धिः ३ ।

**ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृताऽअभूम ।**

**दिवं पृथिव्याऽअध्यारुहामा विदाम देवान्त्स्वज्ज्योतिः ॥**

यजमानः - पूर्ववत्सङ्कल्पमुच्चार्य - (अमुक) रुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः ! ॐ वृद्धिं भवन्तो ब्रुवन्तु ३ । (ब्राह्मणाश्च) ॐ वृद्धिः ३ ।

**ॐ ज्यैष्ठ्यं च मऽआधिपत्यं च मे मन्युश्च मे भामश्च मे मश्च मेम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥**

यजमानः - पूर्ववत्सङ्कल्पमुच्चार्य - (अमुक) रुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः ! ॐ कल्याणं भवन्तो ब्रुवन्तु ३ । (ब्राह्मणाश्च) ॐ कल्याणम् ३ ।

**ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः ।**

**ब्रह्मराजन्याभ्याꣳशूद्राय चार्याय च स्वाय चारणाय च ॥**

**प्रियो देवानां दक्षिणायै दातुरिह भूयासमयम्मे कामः समृद्ध्यतामुपमादो नमतु ॥**

यजमानः - पूर्वसङ्कल्पमुच्चार्य - (अमुक) रुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः । ॐ शान्तिं भवन्तो ब्रुवन्तु ३ । (ब्राह्मणाश्च) ॐ शान्तिः ३ ।

**ॐ द्यौः शान्तिरन्तरिक्ष ꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥**

यजमानः - पूर्ववत्सङ्कल्पमुच्चार्यः - (अमुक) रुद्राभिषेककर्मणि मम गृहे भो ब्राह्मणाः ! ॐ श्रियं भवन्तो ब्रुवन्तु ३ । (ब्राह्मणाश्च) ॐ श्रीः ३ ।

**ॐ मनसः काममाकूतिं वाचः सत्यमशीय ।**

**पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयताम् ।**

इति मन्त्रान् पठित्वा -

**श्रीर्वर्चस्वमायुष्यमारोग्यमाभिधात् पवमानं महीयते ।**

**धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥**

**मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ।**

**शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयोऽस्तु वः ॥**

**अव्याधिना शरीरेण मनसा च निराधिना ।**

**पूरयन्नर्थिनामाशास्त्वं जीव शरदां शतम् ॥**

इति पठन्तः पूगीफलादीनि यजमानाय समर्पयेयुः ।

**॥ इति पुण्याहवाचनम् ॥**

### (इ) दीपपूजा[3]

ततो यजमान आचार्यो वा यथाविधिमर्घ्यं संस्थाप्य दीपगणेशकलशादीन् पूजयेत् ।[4]

**ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वाऽओषधीराविवेश ।**

**वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा सरिषस्पातु नक्तम् ॥**

इति मन्त्रेण दीपं प्रज्ज्वाल्य

**भो दीपनारायण ! इहागच्छ, इह तिष्ठ, मम पूजां गृहाण । यावत्कर्म करोमि तावत्त्वं सुस्थिरो भव, वरदो भव ।** इत्यावाह्य,

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥**

**ॐ कर्मसाक्षिणे दीपनारायणाय नमः ।** इति पूजयेत् ।

ततो हस्ते पुष्पादीन्यादाय -

**ॐ नमः कमलनाभाय नमस्ते जलशायिने ।**

**नमस्ते केशवानन्त वासुदेव नमोऽस्तुते ॥**

---

३. हाम्रा वैदिक कर्ममा जुनसुकै कर्म गर्दा पनि पिशाच, राक्षस आदि विघ्नकारक तत्त्वहरूदेखि सावधान भएर कर्म गर्ने गरिन्छ । याज्ञिक परम्परामा विघ्नकारक तत्त्वहरूका साथै तिनका निराकरणका उपायहरू पनि पत्ता लगाइएका छन् । जसमध्ये दीपपूजा पनि एक हो । कर्मस्थानमा बत्ती बालेर राखेपछि कुनै पनि विघ्नकारक तत्त्वहरू त्यहाँ आउन र विघ्न गर्न समर्थ हुँदैनन् । यसकारण बत्ती बालेर राखिन्छ । दियो बाल्दा देवकार्यमा पूर्व फर्काउनु ज्यादै उत्तम कुरा हो र धेरै पूर्वतिर फर्काएर राख्छन् पनि । कसैकसैको भनाइमा जतातिर देवता रहन्छन् त्यतैतिर फर्काउनुपर्छ भन्ने छ । यसलाई पनि नराम्रो भन्न सकिँदैन र कारण-बत्ती जतातिर फर्के पनि त्यसको प्रकाश त सबैतिर फैलिएको हुन्छ र त्यसले आफुले गर्ने काम पनि गरिहाल्दछ । रुद्राभिषेकमा पूर्वतिरको त्रिशूल रेखीमा टपरीमा चामल राखेर त्यसमाथि दियो राखेर पूजा गरिन्छ ।

४. केही शास्त्रकारले सुरुमा दियो, कलश, गणेश र कसैले दियो, गणेश, कलशको पूजा गर्नू भनेका छन् । उत्तरोत्तर क्रमलाई ध्यानमा राखेर यहाँ दियो, गणेश र कलश पूजा बताइएको छ ।

वासनाद्वासुदेवस्य वासितं भुवनत्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तुते ॥
शुभं भवतु कल्याणमारोग्यं सुखसम्पदः ।
सर्वशत्रुविनाशाय दीपज्योतिर्नमोऽस्तु ते ॥

॥ इति प्रार्थयेत् ॥

### (ई) गणेशपूजा[५]

पूर्वसङ्कल्पमुच्चार्य, मम (अमुक) कर्म निर्विघ्नपरिसमाप्त्यर्थं यथा सम्पादितोपचारैर्गणपतिपूजनमहं करिष्ये इति सङ्कल्प्य गणानान्त्वेति गणेशमावाहयेत् -

ॐ गणानान्त्वा गणपति ꣳ हवामहे प्रियाणान्त्वा प्रियपति ꣳ हवामहे निधीनान्त्वा निधिपति ꣳ हवामहे वसोमम । आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥

"ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहित साङ्ग सायुध सवाहन सपरिवार श्रीमन् महागणाधिपते ! इहागच्छ इह तिष्ठ मम पूजां गृहाण यावत्पूजां करोमि तावत्त्वं सुस्थिरो भव । सुवरदो भव ।"

इत्यावाहय -

ॐ नमः सिद्धिबुद्धिसहिताय साङ्गाय सायुधाय सवाहनाय सपरिवाराय श्रीमते महागणाधिपतये- इदमासनम्, पाद्यम्, अर्घ्यम्, आचमनीयम्, पञ्चामृतम् स्नानीयम्, पुनराचमनीयम्, वस्त्रम्, यज्ञोपवीतम्, चन्दनम्, अक्षतान्, पुष्पाणि, दूर्वाङ्कुराणि, धूपम्, दीपम्, नैवेद्यम्, पूगीफलम्, फलम्, दक्षिणाम्, पादवन्दनम्, प्रदक्षिणाञ्च समर्पयामि । इति संपूज्य

हस्ते अर्घ्यसहितं फलादिकमादाय स्तुतिं कुर्यात् -

ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ।
भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥
द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो ॥
वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ।
अनेन फलदानेन सफलोऽस्तु सदा मम ॥

इति अर्घ्यसहितं फलं समर्पयेत् ।

---

५. "श्रेयांसि बहुविघ्नानि" अर्थात् शुभ कार्यमा धेरै विघ्न आउँछन् । मङ्गलस्वरूप गणेशको पूजा गरे सबै विघ्न शान्त हुन्छन् । शास्त्रको भनाइ पनि यही छ । व्यवहारमा पनि यस्तै देखिन्छ । यसकारण गणेशको पूजा गरेर कर्मको प्रारम्भ गरिन्छ ।

ततः प्रार्थना -

**ॐ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ।**

**नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥**

**अविरलमदजलनिवहं भ्रमरकुलानेकसेवितकपोलम् ।**

**अभिमतफलदातारं कामेशं गणपतिं वन्दे ॥**

**वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ**

**अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥** इति

### (उ) कलशपूजा[६]

ईशानदिग्भागेऽव्रणं ताम्रं मृण्मयं वा कलशं धान्योपरि संस्थाप्य भूरसीति भूमिशोधनम् -

**ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ।**

**पृथिवीं यच्छ पृथिवीन्दृ ꣳ ह पृथिवीं मा हि ꣳसीः ॥**

धान्यमसीति धान्यं स्थापयेत् -

**ॐ धान्यमसि धिनुहि देवान् प्राणायत्वोदानाय त्वा व्यानाय त्वा ।**

**दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रति गृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि ॥**

आजिघ्रेति कलशं स्थापयेत् -

**ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः ।**

**पुनरूर्जा निवर्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः ॥**

इमम्मे वरुणेति तीर्थादिजलं प्रक्षिपेत् -

**ॐ इमम्मे वरुणश्रुधी हवमद्या च मृडय ।**

**त्वामवस्युराचके ॥**

---

६. यज्ञहरूमा सर्वत्र उदक्संस्थको प्राशस्त्य देखिएको र हाम्रो चलनमा पूर्वमा दियो राख्ने, त्यसभन्दा उत्तरमा गणेश राख्ने र त्यसको पनि उत्तरमा अर्थात् ईशानमा कलश राख्ने गरिन्छ । त्यसकारण दियो, गणेश र कलश पूजा गर्दा हुन्छ । कलश वेदीको ईशानतर्फ राखिन्छ । यसैले यसलाई ईशानकलश भन्दछन् र यसै कलशको जलले कर्मसमाप्तिमा शान्ति अभिषेक गरिन्छ, यस कारण यसलाई शान्तिकलश पनि भनिन्छ । यस कलशमा वरुण देवताको पूजा गरिन्छ । गणपत्यादि देवताहरूको पनि यसैमा पूजा हुन्छ ।

याऽओषधीरिति सर्वौषधीः प्रक्षिपेत् -

**ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।**

**मनैनु बभ्रूणामह ꣳ शतं धामानि सप्त च ॥**

हिरण्यगर्भ इति पञ्चरत्नानि -

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।**

**स दाधार पृथिवीं द्यामुते माङ्कस्मै देवाय हविषा विधेम ॥**

याः फलिनीरिति फलानि -

**ॐ याः फलीनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ।**

**बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥**

यवोसीति यवान् -

**ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीर्दिवेत्वान्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥**

गन्धद्वारामिति गन्धम् -

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

काण्डात्काण्डादिति दूर्वाः -

**ॐ काण्डात् काण्डात्प्ररोहन्ती परुषः परुषस्परि ।**

**एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥**

स्योनापृथिवीति सप्तमृदः -

**ॐ स्योना पृथिवि नो भवा नृक्षरा निवेशनी ।**

**यच्छा नः शर्म सप्रथाः ।**

अश्वत्थेव इति पञ्चपल्लवैस्तन्मुखमाच्छाद्य -

**ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।**

**गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ॥**

बृहस्पत इति वस्त्रयुग्मेन कलशं वेष्टयेत् -

**ॐ बृहस्पतेऽअति यदर्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।**

**यद्दीदयच्छ्व वसऽऋतप्रजात तदस्मासुद्रविणं धेहि चित्रम् ॥**

**उपयामगृहीतोसि बृहस्पतये त्वैषते योनिर्बृहस्पतये त्वा ।**

अम्बेऽअम्बिक इति आम्रपल्लवादिभिस्तन्मुखमाच्छादयेत् -

**ॐ अम्बेऽअम्बिकेम्बालिके न मानयति कश्चन ।**

**ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ।**

तत्त्वायामीति वरुणमावाहय षोडशोपचारैः पूजयेत् -

**ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।**

**अहेडमानो वरुणेह बोद्ध्युरुशᳪस मानऽआयुः प्रमोषीः ॥**

भो वरुण ! इहागच्छ, इह तिष्ठ मम पूजां गृहाण । यावत्पूजां करोमि तावत्त्वं सुस्थिरो भव । सुवरदो भव ।

तत्रैव सर्वे समुद्रा इति तीर्थान्यावाहयेत् -

**ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।**

**आयान्तु यजमानस्य दुरितक्षयकारकाः ।**

ततः कलशं स्पृष्ट्वाभिमन्त्रयेत् -

**ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।**

**मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥**

**कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ।**

**ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥**

**अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।**

ततः कलशं प्रार्थयेत् -

**ॐ देवदानवसंवादे मथ्यमाने महोदधौ ।**

**उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥**

**त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।**

**त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥**

**शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।**

**आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥**

**त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥**

**त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ।**

**सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ॥**

॥ इति ॥

### (ऊ) रक्षाबन्धनपूजा[१]

ततः यवदूर्वासर्षपचन्दनगोमयदधिसहितां रक्षां ताम्रपात्रे स्थापयेत् । तत्रैव यवदूर्वासर्षपचन्दनगोमयदधिसहितां निर्मितां पोटलिकां स्पृशन्नारायणकवचं पठेत् -

**ॐ पूर्वे रक्षतु गोविन्द आग्नेय्यां धरणीधरः ।**

**याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥**

**वारुण्यां केशवो रक्षेद्वायव्यां मधुसूदनः ।**

**उत्तरे श्रीधरो रक्षेदैशान्यान्तु गदाधरः ॥**

**ऊर्ध्वं गोवर्धनो रक्षेदधस्तात्तु महीधरः ।**

**एवं दशदिशो रक्षेद्वासुदेवो जनार्दनः ।**

तत आचार्यो यजमानस्य दक्षिणकरे पोटलिकां बध्नीयात् ।

तदनन्तरम् अधोलिखितैः मन्त्रैः रक्षासूत्रं पूजयेत् -

**ॐ रक्षोहणं वलगहनं वैष्णवीमिदमहन्तं वलगमुत्किरामि यम्मेनिष्ट्यो यममात्यो निचखानेदमहन्तं वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥**

---

७. रक्षाबन्धनका निमित्त त्रिसूत्री धागो पहेँलो चन्दन (बेसार) ले रङ्गाई जौ, दुबो, सर्स्यूँ, चन्दन, गोबर, दहीसमेत ताम्रपात्रमा राखेर नारायणकवचको पाठ गरिन्छ र रक्षादेवीको पूजा गरिन्छ । यसरी पूजा गरेको रक्षासूत्र कर्म समाप्ति भएपछि यजमानको हातमा बाँधिन्छ । यसबाट यजमानको कल्याण हुन्छ । भूतप्रेतादि अनिष्टकारक तत्त्वहरूले छुन सक्दैनन् ।

ॐ स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्य मित्रहा ॥

ॐ रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो वलगहनोवनयामि वैष्णवान्रक्षोहणो वो वलगहनोवस्तृणामि वैष्णवान्रक्षोहणौ वां वलगहनाऽउपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवाःस्थ ॥

ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ॥

ॐ त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः ।
रक्षा तोकमुतत्मना ॥

ततो रक्षासूत्रं कलशस्कन्धप्रदेशे स्थापयेत् ।

॥ इति ॥

ततः कलशस्कन्धप्रदेशे -

ॐ गणपत्यादिपञ्चायतनेभ्यो नमः, ॐ विनायकादिपञ्चलोकपालेभ्यो नमः,
ॐ सूर्यादिनवग्रहेभ्यो नमः, ॐ ईश्वराद्यधिदेवेभ्यो नमः,
ॐ अग्न्यादिप्रत्यधिदेवेभ्यो नमः, ॐ इन्द्रादिदशदिक्पालेभ्यो नमः,
ॐ ध्रुवाद्यष्टवसुभ्यो नमः, ॐ धात्रादिद्वादशादित्येभ्यो नमः,
ॐ वीरभद्राद्येकादशरुद्रेभ्यो नमः, ॐ गौर्यादिषोडशमातृभ्यो नमः,
ॐ आवहादिसप्तमरुद्भ्यो नमः, ॐ विनायकब्रह्मविष्णुरुद्रार्कवनस्पतिभ्यो नमः ।
ॐ इष्टदेवताभ्यो नमः । ॐ कुलदेवताभ्यो नमः । ॐ स्थानदेवताभ्यो नमः ।
ॐ सर्वाभ्यः देवीदेवताभ्यो नमः ।

इति नाममन्त्रेण यथासम्पादितपाद्यादिधूपदीपनैवद्यान्तैरुपचारैः पूजयेत् ।

ततः प्रार्थयेत् -

सूर्यः शौर्यमथेन्दुरिन्द्रपदवीं सन्मङ्गलं मङ्गलः ।
सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः सुखं शं शनिः ।
राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिं ।
नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः ॥

॥ इति ॥

## (ऋ) प्रधानदेवतापूजा

आदौ ध्यानम् -

**ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं,**

**रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।**

**पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं**

**विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥**

आवाहनम् -

**एह्येहि गौरीश पिनाकपाणे शशाङ्कमौले वृषभाधिरूढ ।**

**देवाधिदेवेश महेश नित्यं गृहाण पूजां भगवन् नमस्ते ॥**

**ॐ नमस्ते रुद्र मन्यवऽउतोतऽइषवे नमः ।**

**बाहुभ्यामुत ते नमः ॥**

आवाहनं समर्पयामि श्री साम्बसदाशिवाय नमः ।

आसनम् -

**ॐ या ते रुद्र शिवा तनूरघोरा पापकाशिनी ।**

**तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥**

**रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् ।**

**आसनं च मया दत्तं गृहाण परमेश्वर ॥**

आसनं समर्पयामि श्रीसाम्बसदाशिवाय नमः ॥

पाद्यम् -

**ॐ यामिषुङ्गिरिशन्त हस्ते विभर्ष्यस्तवे ।**

**शिवाङ्गिरित्रताङ्कुरु मा हि ꣳसीः पुरुषञ्जगत् ॥**

**उष्णोदकं निर्मलञ्च सर्वसौगन्ध्यसंयुतम्**

**पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥** पाद्यम् सम०।

अर्घ्यम् -

**ॐ शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।**

**यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमनाऽअसत् ॥**

**अर्घ्यं गृहाण देवेश गन्धपुष्पाक्षतैर्युतम् ।**

**करुणाकर मे देव प्रसन्नो भव शङ्कर ॥** अर्घ्यम् सम०।

आचमनीयम् -

**ॐ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।**

**अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योधराचीः परासुव ॥**

**सर्वतीर्थसमायुक्तं सुगन्धि विमलं जलम् ।**

**आचम्यतां मया दत्तं चन्द्रशेखर शङ्कर ॥** आचमनीयम् सम०।

स्नानीयम् -

**ॐ असौ यस्ताम्रोऽअरुणऽउत बभ्रुः सुमङ्गलः ।**

**ये चैन ꣳरुद्राऽअभितो दिक्षु श्रिताः सहस्रशो वैषाꣳ हेडऽईमहे ॥**

**गङ्गा-सरस्वती-रेवा-पयोष्णी-नर्मदाजलैः ।**

**स्नापितोऽसि मया देव ततः शान्तिं कुरुष्व मे ॥** स्नानीयं सम०।

ऊर्ध्ववक्त्रध्यानम् -

**व्यक्ताव्यक्तगुणोत्तरं सुवदनं षड्विंशतत्त्वाधिकं**

**तस्मादुत्तरतत्त्वमक्षयमिति ध्येयं सदा योगिभिः ।**

**वन्दे तामसवर्जितेन मनसा सूक्ष्मातिसूक्ष्मं परं**

**शान्तं पञ्चममीश्वरस्य वदनं खंव्यापि तेजोमयम् ॥**

इति ध्यात्वा

पञ्चामृतस्नानम् - तत्रादौ क्षीरस्नानम् -

ॐ आप्यायस्वेति गौतम ऋषिः पयोदेवता गायत्री छन्दः ऊर्ध्ववक्त्रे ईशानाय क्षीरस्नाने विनियोगः ।

**ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।**

**भवा वाजस्य सङ्गथे ॥**

**गोक्षीरधाम देवेश गोक्षीरेण मया कृतम् ।**

**स्नपनं देवदेवेश गृहाण परमेश्वरः ॥** पयःस्नानं सम०।

शुद्धोदकस्नानम् -

**ॐ आपोऽअस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।**

**विश्वꣳहिरिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूतऽएमि ।**

**दीक्षातपसोस्तनूरसि तां त्वा शिवाꣳशग्मां परिदधे भद्रं वर्णं पुष्यन् ॥**

[शुद्धोदकस्नानं समर्पयामि साम्ब...]

ततः -

**ॐ भूर्भुवः स्वः तत्पुरुषाय विद्महे महादेवाय धीमहि ।**

**तन्नो रुद्रः प्रचोदयात् ॥**

ॐ ईशानाय नमः । इति मन्त्रेण गन्धपुष्पादिभिः पूजयेत् ।

(एवं सर्वत्र)

तत्र पूर्ववक्त्रध्यानम् -

**संवर्ताग्नितडित्प्रतप्तकनकप्रस्पर्द्धितेजोऽरुणं**

**गम्भीरस्मृतिनिःसृतोग्रदशनप्रोद्भासिताम्राधरम् ।**

**बालेन्दुद्युतिलोलपिङ्गलजटाभारप्रबद्धोरगं**

**वन्दे सिद्धसुरासुरेन्द्रनमितं पूर्वं मुखं शूलिनः ॥**

इति ध्यात्वा

दधिस्नानम् -

ॐ दधिक्राब्णो इति वामदेवऋषिर्दधिदेवता अनुष्टुप्छन्द पूर्ववक्त्रे तत्पुरुषाय दधिस्नाने विनियोगः ।

ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखाकरत्प्रणऽआयूँषि तारिषत् ।
दध्ना चैव महादेव स्नपनं क्रियते मया ।
गृहाणैव मया दत्तं सुप्रसन्नो भवाद्य वै ॥ [दधिस्नानं समर्पयामि...]

शुद्धोदकस्नानम् -

ॐ आपोऽअस्मान् ०। [शुद्धोदकस्नानं समर्पयामि ...]

पुनः ॐ तत्पुरुषाय नमः, इति पूर्ववत् गन्धादिभिः संपूजयेत् ।

तत्र पश्चिमवक्त्रध्यानम् -

प्रालेयामलबिन्दुकुन्दधवलं गोक्षीरफेनप्रभं
भस्माभ्यङ्गमनङ्गदेहदहनं ज्वालावलीलोचनम् ।
ब्रह्मेन्द्रादिमरुद्गणैःस्तुतिपरैरभ्यर्चितं योगिभि-
र्वन्देहं सकलं कलङ्करहितं स्थाणोर्मुखं पश्चिमम् ॥ इति ध्यात्वा

घृतस्नानम् -

ॐ घृतं मिमिक्ष इति गृत्समद ऋषिः घृतो देवता त्रिष्टुप्छन्दः पश्चिमवक्त्रे सद्योजाताय घृतस्नाने विनियोगः ।

ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृतेश्रितो घृतम्वस्य धाम ।
अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥
सर्पिषा च महादेव स्नपनं क्रियते मया ।
गृहाण श्रद्धया दत्तं तव प्रीत्यर्थमेव च ॥ [घृतस्नानं समर्पयामि साम्ब...]

शुद्धोदकस्नानम् -

ॐ आपोऽअस्मान् ०। [शुद्धोदकस्नानं समर्पयामि ...]

पुनः ॐ सद्योजाताय नमः । इति पूर्ववत् पूजयेत् ।

तत्र दक्षिणवक्त्रध्यानम् -

कालाभ्रभ्रमराञ्जनाचलनिभं व्यावृत्तपिङ्गेक्षणं
खण्डेन्दुद्वयमिश्रितांशुदशनप्रोद्भिन्नदंष्ट्राङ्कुरम् ।

सर्पप्रोतकपालशुक्तिसकलव्याकीर्णसच्छेखरं

वन्दे दक्षिणमीश्वरस्य कुटिलं भ्रूभङ्गरौद्रं मुखम् ॥ इति ध्यात्वा

मधुस्नानम् -

ॐ मधुवाताऽऋतायते मधु क्षरन्ति सिन्धवः ।

माध्वीर्नः सन्त्वोषधीः ॥

मधु नक्तमुतोषसो मधुमत्पार्थिवꣳरजः ।

मधु द्यौरस्तु नः पिता ॥

मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः ।

माध्वीर्गावो भवन्तु नः ।

तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ।

तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् । [मधुस्नानं समर्पयामि...]

शुद्धोदकस्नानम् -

ॐ आपोऽअस्मान्0। [शुद्धोदकस्नानं समर्पयामि...]

पुनः ॐ अघोराय नमः इति पूर्ववत् पूजयेत् ।

तत्र उत्तरवक्त्रध्यानम् -

गौरं कुङ्कुमपिङ्गलं सुतिलकं व्यापाण्डुगण्डस्थलं

भ्रूविक्षेपकटाक्षवीक्षणलसत्संसक्तकर्णोत्पलम् ।

स्निग्धं बिम्बफलाधरं प्रहसितं नीलालकालङ्कृतं

वन्दे पूर्णशशाङ्कमण्डलनिभं वक्त्रं हरस्योत्तरम् ॥ इति ध्यात्वा

शर्करास्नानम् -

ॐ अपा ꣳ रसमित्यस्य इन्द्रबृहस्पतिऋषिरनुष्टुप्छन्दः सदाशिवो देवता उत्तरवक्त्रे वामदेवाय शर्करास्नाने विनियोगः ।

ॐ अपाꣳरसमुद्वयसꣳसूर्ये सन्तꣳसमाहितम् ।

अपाꣳरसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा

जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥

**इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ।**

**मलापहारिणी दिव्या स्नानाय प्रतिगृह्यताम् ॥** [शर्करास्नानं समर्पयामि...]

शुद्धोदकस्नानम् -

ॐ आपोऽस्मान् ०। [शुद्धोदकस्नानं समर्पयामि ...]

**पुनः ॐ वामदेवाय नमः इति पूर्ववत् पूजयेत् ।**

गन्धोदकस्नानम् -

**मलयाचलसम्भूतं चन्दनागरुवासितम् ।**

**सलिलं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥**

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

**नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम् ।**

**उद्वर्तनं मया दत्तं गृहाण शशिशेखर ॥**

**ॐ अ ꣳशुनाते अꣳशुः पृच्यताम्परुषा परुः ।**

**गन्धस्ते सोममवतु मदाय रसोऽअच्युतः ॥** [गन्धोदकस्कनानं समर्पयामि...]

पुनः शुद्धोदकस्नानम् -

ॐ आपोऽस्मान्० । [शुद्धोदकस्नानं समर्पयामि...]

**(ऋ) ततो नाममन्त्रेण सङ्क्षिप्तपूजा**

"ॐ साम्बसदाशिवाय नमः" ।

इति मन्त्रेण गन्धाक्षतबिल्वपत्रधूपदीपनैवेद्यानि समर्प्य -

"ॐ गणानान्त्वा" इत्यादिभिर्मन्त्रैः संकल्पितावृत्तिभी रुद्राध्यायं पठन् जलधारया (दुग्धादिधारया वा) अभिषेकं कुर्यात्[1] ।

८. **स्नपनद्रव्यभेदेन फलभेदाः -**
जलेन वृष्टिमाप्नोति व्याधिशान्त्यै कुशोदकैः ।
दध्ना च पशुकामाय श्रिया इक्षुरसेन च ॥
मध्वाज्येन धनार्थी स्यान्मुमुक्षुस्तीर्थवारिणा ।
पुत्रार्थी पुत्रमाप्नोति पयसा चाभिषेचनात् ॥
वन्ध्या वा काकवन्ध्या वा मृतवत्सा च याङ्गना ।
सद्यः पुत्रमवाप्नोति पयसा चाभिषेचनात् ॥

अन्यच्च -

ज्वरप्रकोपशान्त्यर्थं जलधारा शिवप्रिया ।
घृतधारा शिवे कार्या यावन्मन्त्रसहस्रकम् ॥
तदा वंशस्य विस्तारो जायते नात्र संशयः ।
प्रमेहरोगशान्त्यर्थं प्राप्नुयान्मानसेप्सितम् ॥
केवलं दुग्धधारा च तदा कार्या विशेषतः ।
शर्करामिश्रिता तत्र यदा बुद्धिर्जडा भवेत् ॥
श्रेष्ठा बुद्धिर्भवेत्तस्य कृपया शङ्करस्य च ॥
सार्षपेणैव तैलेन शत्रुनाशो भवेदिह ॥
मधुना यक्ष्मराजोऽपि गच्छेद्वै शिवपूजनात् ।
पापक्षयार्थी मधुना निर्व्याधिः सर्पिषा तथा ॥
जीवनार्थी तु पयसा श्रीकामीक्षुरसेन वै ।
पुत्रार्थी शर्करायास्तु रसेनार्चेच्छिवं तथा ॥
महालिङ्गाभिषेकेण सुप्रीतः शङ्करो मुदा ।

**अन्यदपि (आवृत्तिभेदेन फलविशेषः)**

बालग्रहोपशान्त्यर्थमेकावृत्तिमुदीरयेत् ।
उपसर्गादिशान्त्यर्थं त्रिरावृत्तिः पठेन्नरः ॥
ग्रहोपशान्त्यै कर्तव्या पञ्चावृत्तिर्वरानने ।
महाभये समुत्पन्ने सप्तावृत्तिमुदीरयेत् ॥
नवावृत्या भवेच्छान्तिर्वाजपेयफलं लभेत् ।
राजवश्ये विभूत्यै च रुद्रावृत्तिमुदीरयेत् ॥
रुद्रैस्त्रिभिः कामसिद्धिर्वैरिहानिश्च जायते ।
रुद्रैः पञ्चभिः शत्रुश्च तथा स्त्रीवश्यतामियात् ॥
रुद्रैः सप्तभिः सङ्ख्याभिः श्रियमाप्नोति मानवः ।
नवरुद्रैः पुत्रपौत्रधनधान्यसमन्वितः ॥
राजभीतिविनाशाय वैरस्योच्चाटनाय च ।
धर्मार्थकाममोक्षाणां साधनाय ततः परम् ॥
अल्पमृत्युविनाशाय तथारोग्ययशः श्रियै ।
राज्यवृद्धिप्रदानार्थं महारुद्रैकसङ्ख्यया ॥
त्रिभिश्चैव महारुद्रैरसाध्यसाधनाय च ।
पञ्चभिश्च महारुद्रैः राज्यलाभः प्रसाध्यते ॥
सप्तभिश्च महारुद्रैः सप्तलोकः प्रसाध्यते ।
नवभिश्च महारुद्रैः पुनर्जन्म न विद्यते ॥
अतिरुद्रैकसङ्ख्येन देवत्वं प्राप्नुयान्नरः ।
डाकिन्यादिभये प्राप्ते एकावृत्तिं जपेन्नरः ॥
भूतप्रेतपिशाचानां भये च गुणवृत्तिभिः ।
ग्रहदोषदशायाश्च पञ्चावृत्तिर्न संशयः ॥
ज्वरातिसारदोषादौ वातपित्तकफादिषु ।
सर्वरोगोपशान्त्यर्थं सप्तावृत्तीः पठेन्नरः ॥

**(ख) रुद्राभिषेकान्तर्गतः षडङ्गन्यासः शतरुद्रीयमन्त्रपाठक्रमश्च**

तत्र क्रमः

**(अ) रुद्राध्यायस्य प्रथमाध्यायपाठः**

**हृदयन्यासः**

(**गणानान्त्वा.** इत्यारभ्य **सुषारथिरश्वान्.**)

इति रुद्राध्यायस्य दशमन्त्रात्मकं प्रथमाध्यायं पठित्वा- **"ॐ हृदयाय नमः"** इति हृदयन्यासं कुर्यात् ।

**(आ) द्वितीयाध्यायस्य षोडशमन्त्रपाठः**

**शिरोन्यासः**

**'सहस्रशीर्षा पुरुषः.'** इत्यारभ्य **'यज्ञेन यज्ञम्.'** इत्यन्तान् द्वितीयाध्यायस्य षोडश मन्त्रान् पठित्वा- **"ॐ शिरसे स्वाहा"** इति शिरोन्यासं कुर्यात् ।

**(इ) द्वितीयाध्यायस्य अवशिष्टमन्त्रपाठः**

**शिखान्यासः**

**'अद्भ्यः सम्भृतः.'** इत्यारभ्य **श्रीश्चते.,** इति षण्मन्त्रान् पठित्वा- **"ॐ शिखायै वषट्"** इति शिखान्यासः ।

**(ई) तृतीयाध्यायस्य पाठः**

**कवचन्यासः**

**आशुः शिशानः०** इत्यारभ्य **मर्माणिते०** इति सप्तदशमन्त्रात्मकं तृतीयाध्यायं पठित्वा- **"ॐ कवचाय हुम्"** इति कवचन्यासं कुर्यात् ।

**(उ) चतुर्थाध्यायस्य पाठः**

**नेत्रन्यासः**

**विभ्राड् बृहत्०** इत्यारभ्य **आकृष्णेन०** इति सप्तदशमन्त्रात्मकं चतुर्थाध्यायं पठित्वा - **"ॐ नेत्रत्रयाय वौषट्"** इति नेत्रन्यासं कुर्यात् ।

---

असाध्यरोगनाशाय मनोऽभीप्सितकर्मणि ।
अल्पमृत्युविनाशाय तथारोग्याय वै नमः ॥
(इति रुद्रयामले, मेरुतन्त्रे)

(ऊ) पञ्चमाध्यायस्य षोडशमन्त्रपाठः

अस्त्रन्यासः

**नमस्ते**० इत्यारभ्य **मानस्तोके**० इति षोडश मन्त्रान् पठित्वा -

**"ॐ अस्त्राय फट्"** इति अस्त्रन्यासं कुर्यात् ।

॥ इति षडङ्गन्यासक्रमः ॥

(ऋ) तत्र शतरुद्रीयमन्त्रपाठक्रमः

पञ्चमाध्यायस्य प्रथममन्त्रतः समग्राध्यायपाठः, पुनः (**नमस्ते**०) षोडशमन्त्र पाठः । समग्रषष्ठाध्याय पाठः० (**एषते** इति द्वौ मन्त्रौ, **नमस्ते**० इति द्वौ मन्त्रौ, **नतम्विदाथ**० इति द्वौ मन्त्रौ, **मीढुष्टम** इति चत्वारो मन्त्राः, **वयँसोम** इति अष्टौ मन्त्राणां पाठः) ॥

॥ इति शतरुद्रीयमन्त्रपाठक्रमः ॥

(ॠ) अथ शान्तिपाठक्रमः

**उग्रश्च, अग्निँहृदयेन, उग्रँल्लोहितेन, वाजश्च मे, प्राणश्च मे, इमा मे, विश्वतश्चक्षुः** इत्येकैकं मन्त्रं पठित्वा -

**"ऋचं वाचम्०"** इत्यस्य समग्राध्यायपाठः, अन्ते च -

**ॐ स्वस्ति नऽइन्द्रः, विश्वानि देव इत्येतेषां मन्त्राणां पाठः ।**

॥ इति शान्तिपाठक्रमः ॥

## (ग) अथ रुद्राभिषेकः

(अ) षडङ्गन्यासः

ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञ‌ꣳसमिमन्दधातु ॥
व्विश्श्वेदेवासऽइहमादयन्तामों३ प्रतिष्ठ ॥

ॐ हृदयाय नमः ॥१॥

ॐ अबोद्ध्यग्निः समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् ॥
यह्वाऽइवप्रवयामुज्जिहानाःप्रभानवः सिस्रतेनाकमच्छ ॥

ॐ शिरसे स्वाहा ॥२॥

ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्याव्वैश्श्वानरमृतऽआजातमग्निम् ॥
कविꣳसम्म्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥

ॐ शिखायै वषट् ॥३॥

ॐ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥
उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥

ॐ कवचाय हुम् ॥४॥

ॐ व्विश्श्वतश्च्चक्षुरुतव्विश्श्वतोमुखोव्विश्श्वतोबाहुरुतव्विश्श्वतस्प्पात् ॥
सम्बाहुब्भ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥

ॐ नेत्रत्रयाय वौषट् ॥५॥

ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः ॥
मानोव्वीरान्रुद्द्रभामिनोव्वधीर्हविष्म्मन्तःसदमित्त्वाहवामहे ॥

ॐ अस्त्राय फट् ॥६॥

ध्यानम् -

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ॥
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

(आ) शतरुद्रीयमन्त्रपाठः

## अथ रुद्रे प्रथमोऽध्यायः

श्रीगणेशाय नमः ।

हरिः ॐ गणानान्त्वागणपतिꣳहवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳहवामहे निधीनान्त्वानिधिपतिꣳ हवामहेव्वसोमम ॥ आहमजानिगर्ब्भधमात्त्वमजासिगर्ब्भधम् ॥१॥

गायत्रीत्रिष्ट्टुब्ब्जगत्त्यनुष्ट्टुप्पङ्क्त्यासह ॥

बृहत्त्युष्णिणहाककुप्प्सूचीभिः शम्म्यन्तुत्त्वा ॥२॥

द्विपदायाश्च्चतुष्प्पदास्त्रिपदायाश्च्चषट्पदाः ॥

व्विच्छन्दायाश्च्चसच्छन्दाः सूचीभिः शम्म्यन्तुत्त्वा ॥३॥

सहस्तोमाःसहच्छन्दसऽआवृतः सहप्प्रमाऽऋषयःसप्प्तदैव्व्याः ॥

पूर्व्वेषाम्पन्थामनुदृश्श्यधीराऽअन्न्वालेभिरेरत्थ्योनरश्श्मीन् ॥४॥

यज्जाग्ग्रतोदूरमुदैतिदैवन्तदुसुप्प्तस्यतथैवैति ॥

दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः शिवसङ्कल्प्पमस्तु ॥५॥

येनकर्म्माण्ण्यपसोमनीषिणोयज्ञेकृण्ण्वन्तिव्विदथेषुधीराः ॥

यदपूर्व्वंयक्षमन्तःप्प्रजानान्तन्मेमनः शिवसङ्कल्प्पमस्तु ॥६॥

यत्त्प्रज्ञानमुतचेतोधृतिश्च्चयज्ज्योतिरन्तरमृतम्प्रजासु ॥

यस्म्मान्नऽऋतेकिञ्चनकर्म्मक्क्रियतेतन्मेमनः शिवसङ्कल्प्पमस्तु ॥७॥

येनेदम्भूतम्भुवनम्भविष्ष्यत्त्परिगृहीतममृतेनसर्व्वम् ॥

येनयज्ञस्त्तायतेसप्प्तहोतातन्मेमनः शिवसङ्कल्प्पमस्तु ॥८॥

यस्म्मिन्नृचः सामयजूꣳषियस्म्मिन्न्प्रतिष्ठितारथनाभाविवाराः ॥

यस्म्मिँश्च्चित्तꣳसर्व्वमोतम्प्रजानान्तन्मेमनः शिवसङ्कल्प्पमस्तु ॥९॥

सुषारथिरश्श्वानिवयन्मनुष्ष्यान्नेनीयतेभीशुभिर्व्वाजिनऽइव ॥

हृत्त्प्रतिष्ठँयदजिरञ्जविष्ठन्तन्मेमनः शिवसङ्कल्प्पमस्तु ॥१०॥

॥ इति रुद्रे प्रथमोऽध्यायः ॥

## अथ रुद्रे द्वितीयोऽध्यायः

हरिः ॐ सहस्रशीर्षापुरुषꣳसहस्राक्षऽसहस्रपात् ॥

सभूमिꣳसर्व्वतस्पृत्त्वात्त्यतिष्ठद्दशाङ्गुलम् ॥१॥

पुरुषऽएवेदꣳसर्व्वँय्यद्भूतँय्यच्चभाव्व्यम् ॥

उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥२॥

एतावानस्यमहिमातोज्ज्यायाँश्च्चपूरुषꣳ ॥

पादोस्यव्विश्श्वाभूतानित्रिपादस्यामृतन्दिवि ॥३॥

त्रिपादूर्द्ध्वऽउदैत्पुरुषꣳ पादोस्येहाभवत्पुनः ॥

ततोव्विष्ष्वङ्व्व्यक्क्रामत्साशनानशनेऽअभि ॥४॥

ततोव्विराडजायतव्विराजोऽअधिपूरुषꣳ ॥

सजातोऽअत्त्यरिच्च्यतपश्च्चाद्भूमिमथोपुरः ॥५॥

तस्म्माद्यज्ञात्त्सर्व्वहुतꣳसम्भृतम्पृषदाज्ज्यम् ॥

पशूँस्ताँश्च्चक्क्रेव्वायव्व्यानारण्ण्याग्ग्राम्म्याश्च्चये ॥६॥

तस्म्माद्यज्ञात्त्सर्व्वहुतऽऋचꣳसामानिजज्ञिरे ॥

छन्दाꣳसिजज्ञिरेतस्म्माद्यजुस्तस्म्मादजायत ॥७॥

तस्म्मादश्श्वाऽअजायन्तयेकेचोभयादतꣳ ॥

गावोहजज्ञिरेतस्म्मात्तस्म्माज्जाताऽअजावयः ॥८॥

तँय्यज्ञम्बर्हिषिप्प्रौक्षन्न्पुरुषञ्जातमग्ग्रतः ॥

तेनदेवाऽअयजन्तसाद्ध्याऽऋषयश्च्चये ॥९॥

यत्पुरुषंव्व्यदधुꣳकतिधाव्व्यकल्प्पयन् ॥

मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्च्येते ॥१०॥

ब्राह्म्मणोऽस्यमुखमासीद्बाहूराजन्न्यःकृतः ॥

ऊरूतदस्ययद्वैश्श्यःपद्भ्याꣳशूद्द्रोऽअजायत ॥११॥

चन्द्रमामनसोजातश्च्चक्षोꣳसूर्य्योऽअजायत ॥

श्रोत्राद्वायुश्च्चप्प्राणश्च्चमुखादग्ग्निरजायत ॥१२॥

नाब्भ्याऽआसीदन्तरिक्षꣳशीर्ष्ष्णोद्यौःसमवर्त्तत ॥

पद्द्भ्याम्भूमिर्द्दिशꣳश्रोत्रात्तथालोकाँ २॥ऽअकल्प्पयन् ॥१३॥

यत्पुरुषेणहविषादेवायज्ञमतन्न्वत ॥

व्वसन्तोऽस्यासीदाज्ज्यङ्ग्ग्रीष्म्मऽइद्ध्मःशरद्धविः ॥१४॥

सप्प्तास्यासन्न्परिधयस्त्रिःसप्प्तसमिधःकृताः ॥

देवायद्यज्ञन्तन्न्वानाऽअबद्ध्नन्न्पुरुषम्पशुम् ॥१५॥

यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्म्माणिप्प्रथमान्न्यासन् ॥

तेहनाकम्महिमानःसचन्तयत्रपूर्व्वेसाद्ध्याःसन्तिदेवाः ॥१६॥

अद्द्भ्यःसम्भृतꣳपृथिव्व्यैरसाच्चव्विश्श्वकर्म्मणꣳसमवर्त्तताग्ग्रे ॥

तस्यत्त्वष्टाव्विदधद्द्रूपमेतितन्न्मर्त्त्यस्यदेवत्त्वमाजानमग्ग्रे ॥१७॥

व्वेदाहमेतम्पुरुषम्महान्तमादित्त्यवर्ण्णन्तमसꣳपरस्तात् ॥

तमेवव्विदित्त्वातिमृत्त्युमेतिनान्न्यःपन्थाव्विद्यतेयनाय ॥१८॥

प्रजापतिश्च्चरतिगर्ब्भेऽअन्तरजायमानोबहुधाव्विजायते ॥

तस्ययोनिम्परिपश्श्यन्तिधीरास्तस्मिन्न्हतस्त्थुर्ब्भुवनानिव्विश्श्वा ॥१९॥

योदेवेब्भ्यऽआतपतियोदेवानाम्पुरोहितꣳ ॥

पूर्व्वोयोदेवेब्भ्योजातोनमोरुचायब्ब्राह्म्मये ॥२०॥

रुचम्ब्राह्म्मञ्जनयन्तोदेवाऽअग्रेतदब्ब्रुवन् ॥

यस्त्त्वैवम्ब्राह्म्मणोव्विद्यात्तस्यदेवाऽअसन्न्वशे ॥२१॥

श्रीश्च्चतेलक्ष्मीश्च्चपत्क्न्यावहोरात्रेपार्श्श्वेनक्षत्राणिरूपमश्श्विनौव्यात्तम् ॥

इष्ण्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण ॥२२॥

॥ इति श्रीरुद्रे द्वितीयोऽध्यायः ॥

## अथ रुद्रे तृतीयोऽध्यायः

हरिः ॐ आशुःशिशानोव्वृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥
सङ्क्रन्दनोनिमिषऽएकवीरःशतꣳसेनाऽअजयत्साकमिन्द्रः ॥१॥
सङ्क्रन्दनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥
तदिन्द्रेणजयततत्सहद्ध्वँय्युधोनरऽइषुहस्तेनव्वृष्णा ॥२॥
सऽइषुहस्तैꣳसनिषङ्गिभिर्व्वशीसꣳस्रष्टासयुधऽइन्द्रोगणेन ॥
सꣳसृष्टजित्सोमपाबाहुशर्द्ध्युग्ग्रधन्वाप्प्रतिहिताभिरस्ता ॥३॥
बृहस्प्पतेपरिदीयारथेनरक्षोहामित्राँ २॥ऽअपबाधमानꣳ ॥
प्रभञ्जन्त्सेनाꣳप्प्रमृणोयुधाजयन्नस्म्माकमेद्ध्यविताराथानाम् ॥४॥
बलविज्ञायस्थविरꣳप्प्रवीरꣳसहस्वान्वाजीसहमानऽउग्ग्रः ॥
अभिवीरोऽअभिसत्त्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥५॥
गोत्रभिदङ्गोविदंव्वज्रबाहुञ्जयन्तमज्ज्मप्प्रमृणन्तमोजसा ॥
इमꣳसजाताऽअनुवीरयद्ध्वमिन्द्रꣳसखायोऽअनुसꣳरभद्ध्वम् ॥६॥
अभिगोत्राणिसहसागाहमानोदयोव्वीरःशतमन्न्युरिन्द्रः ॥
दुश्च्यवनःपृतनाषाडयुद्ध्योस्म्माकꣳसेनाऽअवतुप्प्रयुत्सु ॥७॥
इन्द्रऽआसान्नेताबृहस्प्पतिर्द्दक्षिणायज्ञःपुरऽएतुसोमः॥
देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम् ॥८॥
इन्द्रस्यव्वृष्णोव्वरुणस्यराज्ञऽआदित्त्यानाम्मरुताꣳशर्द्धऽउग्ग्रम् ॥
महामनसाम्भुवनच्च्यवानाङ्घोषोदेवानाञ्जयतामुदस्त्थात् ॥९॥
उद्धर्षयमघवन्नायुधान्न्युत्सत्त्वनाम्मामकानाम्मनाꣳसि ॥
उद्वृत्रहन्व्वाजिनांव्वाजिनान्न्युद्रथानाञ्जयताँय्यन्तु-घोषाꣳ ॥१०॥
अस्म्माकमिन्द्रꣳसमृतेषुद्ध्वजेष्ष्वस्म्माकंय्याऽइषवस्ताजयन्तु ॥
अस्म्माकंव्वीराऽउत्तरेभवन्त्वस्म्माँ २॥ऽउदेवाऽअवताहवेषु ॥११॥
अमीक्षाञ्चित्तम्प्प्रतिलोभयन्तीगृहाणाङ्गान्न्यप्प्वेपरेहि ॥
अभिप्प्रेहिनिर्द्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ॥१२॥

अवसृष्टापरापतशरव्व्येब्ब्रह्मसꣳशिते ॥
गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषꣳ ॥१३॥
प्रेताजयतानरऽइन्द्रोवꣳशर्म्मयच्छतु ॥
उग्रावꣳसन्तुबाहवोनाधृष्ष्यायथासथ ॥१४॥
असौयासेनामरुतꣳपरेषामब्भ्यैतिनऽओजसास्पर्द्धमाना ॥
ताङ्गूहततमसापव्व्रतेनयथामीऽअन्योऽअन्यन्नजानन् ॥१५॥
यत्रबाणाꣳसम्पतन्तिकुमाराव्विशिखाऽइव ॥
तन्नऽइन्द्रोबृहस्प्पतिरदितिꣳशर्म्मयच्छतुव्विश्श्वाहा-शर्म्मयच्छतु ॥१६॥
मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥
उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥१७॥

॥ इति श्रीरुद्रे तृतीयोऽध्यायः ॥

## अथ रुद्रे चतुर्थोऽध्यायः

हरिः ॐ व्विब्भ्राड्बृहत्पिबतुसोम्म्यम्मद्ध्वायुर्द्दधद्यज्ञपतावविह्रुतम् ॥
व्वातजूतोयोऽअभिरक्क्षतित्त्मनाप्प्रजाꣳपुपोषपुरुधाव्विराजति ॥१॥
उदुत्त्यञ्जातवेदसन्देवंव्वहन्तिकेतवꣳ ॥
दृशेव्विश्श्वायसूर्य्यम् ॥२॥
येनापावकचक्क्षसाभुरण्यन्तञ्जनाँ२॥ऽअनु ॥
त्वंव्वरुणपश्श्यसि ॥३॥
दैव्व्यावद्ध्वर्य्यूऽआगतꣳरथेनसूर्य्यत्त्वचा ॥
मद्ध्वायज्ञꣳसमञ्जाथे ॥
तम्प्रत्क्नथायंव्वेनश्चित्रन्देवानाम् ॥४॥
तम्प्रत्क्नथापूर्व्वथाव्विश्श्वथेमथाज्ज्येष्ठतातिम्बर्हिषदꣳस्वर्व्विदम् ॥
प्रतीचीनंव्वृजनन्दोहसेधुनिमाशुञ्जयन्तमनुयासुव्वर्द्धसे ॥५॥
अयंव्वेनश्चोदयत्पृश्निगर्ब्भाज्ज्योतिर्ज्जरायूरजसोव्विमाने ॥

इमम्पाꣳसङ्गमेसूर्य्यस्यशिशुन्नविप्प्रामतिभीरिहन्ति ॥६॥

चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्ग्नेः ॥

आप्प्राद्यावापृथिवीऽअन्तरिक्षꣳसूर्य्यऽआत्माजगतस्तस्थुषश्च ॥७॥

आनऽइडाभिर्व्विदथेसुशस्तिव्विश्वानरꣳसवितादेवऽएतु ॥

अपियथायुवानोमत्सथानोव्विश्ववञ्जगदभिपित्वेमनीषा ॥८॥

यदद्यकच्चव्वृत्रहन्नुदगाऽअभिसूर्य्य ॥ सर्व्वन्तदिन्द्रतेव्वशे ॥९॥

तरणिर्व्विश्वदर्शतोज्ज्योतिष्कृदसिसूर्य्य ॥

व्विश्वमाभासिरोचनम् ॥१०॥

तत्सूर्य्यस्यदेवत्वन्तन्महित्वम्मद्ध्याकर्त्तोर्व्विततꣳसञ्जभार ॥

यदेदयुक्तहरितःसधस्थादाद्रात्रीव्वासस्तनुतेसिमस्मै ॥११॥

तन्मित्रस्यव्वरुणस्याभिचक्षेसूर्य्योरूपङ्कृणुतेद्योरुपस्थे ॥

अनन्तमन्यद्रुशदस्यपाजःकृष्णमन्यद्धरितꣳसम्भरन्ति ॥१२॥

बण्महाँ२॥ऽअसिसूर्य्यबडादित्त्यमहाँ २॥ऽअसि ॥

महस्तेसतोमहिमापनस्यतेद्धादेवमहाँ २॥असि ॥१३॥

बट्सूर्य्यश्श्रवसामहाँ २॥ऽअसिसत्रादेवमहाँ २॥ऽअसि ॥

मह्नादेवानामसुर्य्यःपुरोहितोव्विभुज्ज्योतिरदाब्भ्यम् ॥१४॥

श्रायन्तऽइवसूर्य्यंव्विश्वेदिन्द्रस्यभक्षत ॥

व्वसूनिजातेजनमानऽओजसाप्प्रतिभागन्नदीधिम ॥१५॥

अद्यादेवाऽउदितासूर्य्यस्यनिरꣳहसꣳपिपृतानिरवद्यात् ॥

तन्नो मित्रोव्वरुणोमामहन्तामदितिꣳसिन्धुःपृथिवीऽउतद्यौः ॥१६॥

आकृष्णेनरजसाव्वर्त्तमानोनिवेशयन्नमृतम्मर्त्त्यञ्च ॥

हिरण्ण्ययेनसवितारथेनादेवोयातिभुवनानिपश्श्यन् ॥१७॥

॥ इति रुद्रे चतुर्थोऽध्यायः ॥

# अथ रुद्रे पञ्चमोऽध्यायः

हरिः ॐ नम॑स्तेरुद्द्रम॒न्न्यव॑ऽउ॒तोत॒ऽइषवे॒नम॑÷॥

बा॒हुब्भ्या॑मु॒तते॒नम॑÷ ॥१॥

याते॑रुद्द्रशि॒वात॒नूरघो॒रापा॑पकाशिनी ॥

तया॑नस्त॒न्न्वा॒शन्त॑मया॒गिरि॑शन्ता॒भिचा॑कशीहि ॥२॥

यामिषु॑ङ्गिरिशन्त॒हस्ते॑बि॒भर्ष्ष्यस्त॑वे ॥

शि॒वाङ्गि॑रित्र॒ताङ्कु॑रु॒माहि॑ᳬसी॒ᳶपुरु॑ष॒ञ्जग॑त् ॥३॥

शि॒वेन॒व्वच॑सात्त्वा॒गिरि॒शाच्छा॑व्वदामसि ॥

यथा॑न॒ᳶसर्व्व॒मिज्जग॑दयक्ष्मᳬसु॒मना॒ऽअस॑त् ॥४॥

अद्ध्य॑वोचदधिव॒क्क्ताप्प्र॑थ॒मोदैव्व्यो॑भि॒षक् ॥

अही॑ँश्च्च॒सर्व्वा॑ञ्ज॒म्भय॒न्त्सर्व्वा॑श्च्चयातुधा॒न्न्यो॒धरा॒ची॒ᳶपरा॑सुव ॥५॥

अ॒सौयस्ता॒म्म्रोऽअ॑रु॒णऽउ॒तब॒भ्रुᳫसु॑म॒ङ्गल॑÷ ॥

येचै॑नᳬरु॒द्द्राऽअ॒भितो॑दि॒क्षु॒श्श्रि॒ताᳫस॑हस्र॒शोवै॑षा॒ᳬहेड॑ऽईमहे ॥६॥

अ॒सौयो॑व॒सर्प्प॑ति॒नील॑ग्ग्रीवो॒व्विलो॑हितᳶ ॥

उ॒तैनं॑ङ्गो॒पाऽअ॑दृश्श्रन्न॒दृ॑श्श्रन्नु॒दहा॒र्य्य॒÷सदृ॒ष्ट्टोमृ॑डयातिनᳶ ॥७॥

नमो॑ऽस्तु॒नील॑ग्ग्रीवायसहस्रा॒क्षाय॑मी॒ढुषे॑ ॥

अथो॒येऽअ॑स्य॒सत्त्वा॑नो॒हन्तेब्भ्यो॑करन्न॒मम॑÷ ॥८॥

प्रमु॑ञ्च॒धन्न्व॑न॒स्त्वमु॒भयो॒रात्क्न्यो॑ज्ज्या॑म् ॥

याश्च्च॑ते॒हस्त॒ऽइष॑व॒ᳶपरा॒ताभ॑गवो॒व्वप ॥९॥

व्विज्ज्य॒न्धनु॒÷कप॒र्द्दिनो॒व्विश॑ल्ल्यो॒बाण॑वाँ २॥ऽउ॒त ॥

अने॑शन्नस्य॒याऽइष॑वऽआ॒भुर॑स्यनिषङ्ग॒धिᳫ ॥१०॥

याते॑हे॒तिर्म्मी॑ढुष्ट्टम॒हस्ते॑ब॒भूव॑ते॒धनु॑ ÷ ॥

तया॒स्म्मान्न्विव्व॒श्श्वत॒स्त्वम॑य॒क्ष्मया॒परि॑भुज ॥११॥

परि॑ते॒धन्न्व॑नोहे॒तिर॒स्म्मान्न्वृ॑णक्क्तु॒व्वि॒श्श्वत॑÷ ॥

अथो॒यऽइ॑षु॒धिस्त॒वा॒रेऽअ॒स्म्मन्नि॒धे॑हि॒तम् ॥१२॥

अवतत्त्यधनुष्ट्ट्वꣳसहस्राक्षशतेषुधे ॥
निशीर्य्यशल्ल्यानाम्मुखाशिवोनः सुमनाभव ॥१३॥
नमस्तऽआयुधायानाततायधृष्णवे ॥
उभाब्भ्यामुततेनमोबाहुब्भ्यान्तवधन्न्वने ॥१४॥
मानोमहान्तमुतमानोऽअर्ब्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् ॥
मानोव्वधीःपितरम्मोतमातरम्मानः प्प्रियास्तन्वोरुद्द्ररीरिषः ॥१५॥
मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः ॥
मानोव्वीरान्नुद्द्रभामिनोव्वधीर्हविष्म्मन्तःसदमित्त्वाहवामहे ॥१६॥
नमोहिरण्ण्यबाहवेसेनान्न्येदिशाञ्चपतयेनमोनमोव्वृक्षेब्भ्योहरिकेशेब्भ्यःपशूनाम्पतयेनमो
नमः शष्प्पिञ्जरायत्त्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमोनमो-
बब्भ्लुशाय ॥१७॥
नमोबब्भ्लुशायव्व्याधिनेन्नानाम्पतयेनमोनमोभवस्यहेत्त्यैजगताम्पतयेनमोनमोरुद्द्रायाततायिनेक्षे
त्राणाम्पतयेनमोनमः सूतायाहन्त्त्यैव्वनानाम्पतयेनमोनमोरोहिताय ॥१८॥
नमोरोहितायस्त्थपतयेव्वृक्षाणाम्पतयेनमोनमोभुवन्तयेव्वारिवस्कृतायौषधीनाम्पतयेनमोनमो
मन्त्रिणेव्वाणिजायकक्षाणाम्पतयेनमोनमऽउच्चैर्ग्घोषायाक्क्रन्दयतेपत्तीनाम्पतयेनमोनमः
कृत्स्नायतया ॥१९॥
नमः कृत्स्नायतयाधावतेसत्त्वनाम्पतयेनमोनमःसहमानायनिव्व्याधिनऽआव्याधिनीनाम्पतयेनमो
नमोनिषङ्गिणेककुभायस्तेनानाम्पतयेनमोनमोनिचेरवेपरिचरायारण्ण्यानाम्पतयेनमोनमोव्वञ्चते
॥२०॥
नमोव्वञ्चतेपरिवञ्चतेस्तायूनाम्पतयेनमोनमोनिषङ्गिणऽइषुधिमतेतस्क्कराणाम्पतयेनमो
नमः सृकायिब्भ्योजिघाꣳसद्द्भ्योमुष्णताम्पतयेनमोनमोसिमद्द्भ्योनक्तञ्चर-द्द्
भ्योव्विकृन्तानाम्पतयेनमः ॥२१॥
नमऽउष्णीषिणेगिरिचरायकुलुञ्चानाम्पतयेनमोनमऽइषुमद्भ्योधन्न्वायिब्भ्यश्च्चवोनमो
नमऽआतन्न्वानेब्भ्यः प्प्रतिदधानेब्भ्यश्च्चवोनमोनमऽआयच्छद्द्भ्योस्यद्द्भचश्च्च-वोनमोनमो
व्विसृजदद्भ्यः ॥२२॥
नमोव्विसृजदद्भ्योव्विद्धचद्द्भ्यश्च्चवोनमोनमः स्वपद्द्भ्योजागग्रद्द्भ्यश्च्चवोनमोनमःशयाने
ब्भ्यऽआसीनेब्भ्यश्च्चवोनमोनमस्तिष्ठद्द्भ्योधावद्द्भ्यश्च्चवोनमो-नमः सभाब्भ्यः ॥२३॥

नम॑÷सभाभ्य॑÷सभाप॑तिभ्यश्च॒ वो॒ नमो॒ नमो॒ऽश्वे॒भ्योऽश्व॑पतिभ्यश्च॒ वो॒ नमो॒ नम॑ऽआव्व्याधिनी॑भ्योव्वि॒विद्ध्य॑न्तीभ्यश्च॒वो॒नमो॒नम॒ऽउग॑णाभ्यस्तृ॒ᳫंहतीभ्य॑श्च॒वो॒नमो॒नमो॑ग॒णेभ्य॑÷ ॥२४॥

नमो॑ग॒णेभ्यो॑ग॒णप॑तिभ्यश्च॒वो॒नमो॒नमो॒व्व्राते॑भ्यो॒व्व्रात॑पतिभ्यश्च॒वो॒नमो॒नमो॒गृत्से॑भ्यो॒गृत्स॑पतिभ्यश्च॒वो॒नमो॒नमो॒व्विरू॑पेभ्योव्वि॒श्श्वरू॑पेभ्यश्च॒वो॒नमो॒नम॒ᳫंसेना॑भ्य॒ᳫं ॥२५॥

नम॒ᳫंसेना॑भ्य॒ᳫंसेना॒निभ्य॑श्च॒वो॒नमो॒नमो॑र॒थिभ्यो॑ऽअर॒थेभ्यश्च॒वो॒नमो॒नम॑÷क्ष॒त्तृभ्य॑÷सङ्ग्रही॒तृभ्य॑श्च॒वो॒नमो॒नमो॑म॒हद्भ्यो॑ऽअर्भ॒केभ्य॑श्च॒वो॒नम॑÷ ॥२६॥

नम॒स्तक्ष॑भ्योरथका॒रेभ्य॑श्च॒वो॒नमो॒नम॒ᳫंकुला॑लेभ्य॒ᳫंकर्म्मा॒रेभ्य॑श्च॒वो॒नमो॒नमो॑निषा॒देभ्य॑÷पु॒ञ्जिष्ठे॑भ्यश्च॒वो॒नमो॒नम॑÷श्श्व॒निभ्यो॑मृग॒युभ्य॑श्च॒वो॒नमो॒नम॒ᳫंश्श्वभ्य॑÷ ॥२७॥

नम॒ᳫंश्श्वभ्य॒÷श्श्वप॑तिभ्यश्च॒वो॒नमो॒नमो॑भ॒वाय॑चरु॒द्द्राय॑च॒नम॑÷श॒र्व्वाय॑चपश॒ुपत॑येच॒नमो॒नील॑ग्ग्रीवायचशिति॒कण्ठा॑यच॒नम॑÷कप॒र्द्दिने॑ ॥२८॥

नम॑÷कप॒र्द्दिने॑च॒व्व्यु॑प्तकेशायच॒नम॑÷सहस्रा॒क्षाय॑चश॒तध॑न्न्वनेच॒नमो॑गिरिश॒याय॑चशिपिवि॒ष्टाय॑च॒नमो॑मी॒ढुष्ट॑मायचे॒षु॑मतेच॒नमो॑ह्र॒स्वाय॑ ॥२९॥

नमो॑ह्र॒स्वाय॑चव्वाम॒नाय॑च॒नमो॑बृह॒तेच॒व्वर्षी॑यसेच॒नमो॑व्वृ॒द्द्धाय॑चस॒वृधे॑च॒नमोग्ग्र्या॑यचप्प्रथ॒माय॑च॒नम॑ऽआ॒शवे॑ ॥३०॥

नम॑ऽआ॒शवे॑चाजि॒राय॑च॒नम॒ᳫंशीघ्र्या॑यच॒शीभ्या॑यच॒नम॒ऽऊम्म्या॑यचावस्व॒न्न्या॒यच॒नमो॑नादे॒याय॑चद्द्वीप्प्या॑यच ॥३१॥

नमो॑ज्ज्ये॒ष्ठाय॑चकनि॒ष्ठाय॑च॒नम॑÷पूर्व्व॒जाय॑चापर॒जाय॑च॒नमो॑-मद्ध्य॒माय॑चापग॒ल्भाय॑च॒नमो॑जघ॒न्न्या॒यचबु॒द्ध्न्या॒यच॒नम॒ᳫंसोभ्या॑य ॥ ३२ ॥

नम॒ᳫंसोभ्या॑यचप्प्रतिस॒र्ष्या॒यच॒नमो॒याम्म्या॑यच॒क्षेम्म्या॑यच॒नम॒ᳫंश्श्लोक्क्या॑यचावसा॒न्न्या॒यच॒नम॑ऽउर्व्व॒र्ष्या॒यच॒खल्ल्या॑यच॒नमो॒व्वन्न्या॑य ॥३३॥

नमो॒व्वन्न्या॑यच॒कक्क्ष्या॑यच॒नम॑÷श्श्र॒वाय॑चप्प्रतिश्श्र॒वाय॑च॒नम॑ऽआशु॒षे॑णायचाशु॒र॑थायच॒नम॒ᳫंशूरा॑यचावभे॒दिने॑च॒नमो॑बि॒ल्म्मिने॑ ॥३४॥

नमो॑बि॒ल्म्मिने॑चकव॒चिने॑च॒नमो॑व्व॒र्म्मिणे॑चव्वरू॒थिने॑च॒नम॑÷श्श्रु॒ताय॑चश्श्रुतसे॒नाय॑च॒नमो॑दु॒न्दुभ्या॒यचाहन॒न्न्या॒यच॒नमो॑धृ॒ष्णवे॑ ॥३५॥

नमो॑धृ॒ष्णवे॑चप्प्रमृ॒शाय॑च॒नमो॑निष॒ङ्गिणे॑चेषु॒धिमते॑च॒नम॑स्ती॒क्ष्णेष॑वेचायु॒धिने॑च॒नम॑÷स्वायु॒धाय॑चसु॒धन्न्व॑नेच ॥३६॥

नमः सुत्यायचपत्थ्यायचनमः काट्यायचनीप्प्यायचनमः कुल्यायचसरस्यायचनमोनादेयायचवै शन्तायचनमः कूप्प्याय ॥३७॥

नमः कूप्प्यायचावट्यायचनमोव्वीद्ध्यायचातप्प्यायचनमोमेग्घ्यायचव्विद्युत्यायचनमो व्वर्ष्यायचावर्ष्यायचनमोव्वात्याय ॥३८॥

नमोव्वात्यायचरेष्म्यायचनमोव्वास्तव्यायचव्वास्तुपायचनमः सोमायचरुद्रायचनमस्ताम्म्राय चारुणायचनमः शङ्गवे ॥३९॥

नमः शङ्गवेचपशुपतयेचनमऽउग्ग्रायचभीमायचनमोग्ग्रेवधायचदूरेवधायचनमोहन्त्रेचहनीयसे चनमोव्वृक्षेब्भ्योहरिकेशेब्भ्योनमस्ताराय ॥४०॥

नमः शम्भवायचमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच ॥४१॥

नमः पार्ष्यायचावार्ष्यायचनमः प्प्रतरणायचोत्तरणायचनमस्तीर्त्थ्यायचकूल्ल्यायचनमः शष्प्यायचफेन्यायचनमः सिकत्याय ॥४२॥

नमः सिकत्यायचप्रवाह्यायचनमः किꣳशिलायचक्षयणायचनमः कपर्द्दिनेचपुलस्तयेचनमऽ इरिण्ण्यायचप्प्रपत्थ्यायचनमोव्व्रज्ज्याय ॥४३॥

नमोव्व्रज्ज्यायचगोष्ठ्यायचनमस्तल्प्यायचगेह्यायचनमोहृदय्यायचनिवेष्प्यायचनमः काट्यायचगह्वरेष्ठायचनमः शुष्क्याय ॥४४॥

नमः शुष्क्क्यायचहरित्यायचनमः पाꣳसव्यायचरजस्यायचनमोलोप्प्यायचो लप्प्यायचनमऽऊर्व्व्यायचसूर्व्यायच-नमः पर्ण्णाय ॥४५॥

नमः पर्ण्णायचपर्ण्णशदायचनमऽउद्गुरमाणायचाभिग्घ्नतेच-नमऽआखिदतेचप्प्रखिदते चनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोवः किरिकेब्भ्योदेवानाꣳहृदयब्भ्योनमोव्विचि-न्न्वत्त्केब्भ्योनमोव्विक्षिणत्केब्भ्योनमऽआनिर्हतेब्भ्यः ॥४६॥

द्रापेऽअन्धसस्प्पतेदरिद्द्रनीललोहित ॥

आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनः किञ्चनाममत् ॥४७॥

इमारुद्द्रायतवसेकपर्द्दिनेक्षयद्वीरायप्प्रभरामहेमतीः ॥

यथाशमसद्द्विपदेचतुष्प्पदेव्विश्श्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥४८॥

यातेरुद्द्रशिवातनूः शिवाव्विश्श्वाहाभेषजी ॥

शिवारुतस्यभेषजीतयानोमृडजीवसे ॥४९॥

परिनोरुद्द्रस्यहेतिर्व्वृणक्तुपरित्त्वेषस्यदुर्म्मतिरघायोः ॥
अवस्त्थिरामघवद्भ्यस्तनुष्ष्वमीड्ढ्वस्तोकायतनयायमृड ॥५०॥
मीढुष्टमशिवतमशिवोनः सुमनाभव ॥
परमेव्वृक्षऽआयुधन्निधायकृत्तिंव्वसानऽआचरपिनाकम्बिब्भ्रदागहि ॥५१॥
व्विकिरिद्द्रव्विलोहितनमस्तेऽअस्तुभगवः ॥
यास्तेसहस्रँहेतयोन्न्यमस्म्मन्निवपन्तुताः ॥५२॥
सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥
तासामीशानोभगवःपराचीनामुखाकृधि ॥५३॥
असङ्ख्यातासहस्राणियेरुद्द्राऽअधिभूम्म्याम् ॥
तेषाँसहस्रयोजनेऽवधन्वानितन्मसि ॥५४॥
अस्म्मिन्महत्त्यर्ण्णवेन्तरिक्क्षेभवाऽअधि ॥
तेषाँसहस्रयोजनेऽवधन्वानितन्मसि ॥५५॥
नीलग्ग्रीवाःशितिकण्ठादिवँरुद्द्राऽउपश्रिताः ॥
तेषाँसहस्रयोजनेऽवधन्वानितन्मसि ॥५६॥
नीलग्ग्रीवाःशितिकण्ठाःशर्व्वाऽअधःक्षमाचराः ॥
तेषाँसहस्रयोजनेऽवधन्वानितन्मसि ॥५७॥
येव्वृक्षेषुशष्प्पिञ्जरानीलग्ग्रीवाव्विलोहिताः ॥
तेषाँसहस्रयोजनेऽवधन्वानितन्मसि ॥५८॥
येभूतानामधिपतयोव्विशिखासःकपर्द्दिनः ॥
तेषाँसहस्रयोजनेऽवधन्वानितन्मसि ॥५९॥
येपथाम्पथिरक्क्षयऽऐलबृदाऽआयुर्य्युधः ॥
तेषाँसहस्रयोजनेऽवधन्वानितन्मसि ॥६०॥
येतीर्त्थानिप्प्रचरन्तिसृकाहस्तानिषङ्गिणः ॥
तेषाँसहस्रयोजनेऽवधन्वानितन्मसि ॥६१॥
येन्नेषुव्विविद्ध्यन्तिपात्रेषुपिबतोजनान् ॥
तेषाँसहस्रयोजनेऽवधन्वानितन्मसि ॥६२॥

यऽएतावन्तश्च्चभूयाꣳसश्च्चदिशोरुद्राव्वितस्त्थिरे ॥
तेषाꣳसहस्रयोजनेऽवधन्वानितन्मसि ॥६३॥
नमोस्तुरुद्द्रेब्भ्योयेदिवियेषांव्वर्षमिषवꣳ ॥
तेब्भ्योदशप्प्राचीर्द्दशदक्षिणादशप्प्रतीचीर्द्दशोदीचीर्द्दशोद्ध्वाः ॥
तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्च्चनोद्वेष्टितमेषाञ्जम्भेदद्ध्मꣳ ॥६४॥
नमोस्तुरुद्द्रेब्भ्योयेन्तरिक्षेयेषांव्वातऽइषवꣳ ॥
तेब्भ्योदशप्प्राचीर्द्दशदक्षिणादशप्प्रतीचीर्द्दशोदीचीर्द्दशोद्ध्वाः ॥
तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्च्चनोद्वेष्टितमेषाञ्जम्भेदद्ध्मꣳ ॥६५॥
नमोस्तुरुद्द्रेब्भ्योयेपृथिव्व्याँऽयेषामन्नमिषवꣳ ॥
तेब्भ्योदशप्प्राचीर्द्दशदक्षिणादशप्प्रतीचीर्द्दशोदीचीर्द्दशोद्ध्वाः ॥
तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्च्चनोद्वेष्टितमेषाञ्जम्भेदद्ध्मꣳ ॥६६॥

॥ इति रुद्रे पञ्चमोऽध्यायः ॥

## अथ रुद्रे षष्ठोऽध्यायः

(पुनर्नमस्ते षोडशकं पठित्वा ।)

एषतेरुद्द्रभागः सहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्द्रभागऽआखुस्तेपशुः ॥१॥
अवरुद्द्रमदीमह्यवदेवन्त्र्यम्बकम् ॥
यथानोव्वस्यसस्क्करद्यथानꣳश्रेयसस्क्करद्यथानोव्व्यवसाययात् ॥२॥
नमस्तेरुद्द्रमन्न्यवऽउतोतऽइषवेनमः ॥
बाहुब्भ्यामुततेनमः ॥३॥
यातेरुद्द्रशिवातनूरघोरापापकाशिनी ॥
तयानस्तन्न्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥४॥
नतंव्विदाथयऽइमाजजानान्न्यद्युष्म्माकमन्तरम्बभूव ॥
नीहारेणप्प्रावृताजल्प्प्याचासुतृपऽउक्क्थशासश्च्चरन्ति ॥५॥
व्विश्श्वकर्म्माह्ह्यजनिष्टदेवऽआदिद्गन्धर्व्वोऽअभवद्द्वितीयः ॥
तृतीयः पिताजनितौषधीनामपाङ्गर्ब्भंव्व्यदधात्पुरुत्रा ॥६॥

मीढुष्टमशिवतमशिवोनऽसुमनाभव ॥
परमेव्वृक्षऽआयुधन्निधायकृत्तिंव्वसानऽआचरपिनाकम्बिभ्रदागहि ॥७॥
व्विकिरिद्द्रव्विलोहितनमस्तेऽअस्तुभगवꣳ ॥
यास्तेसहस्रꣳहेतयोन्न्यमस्म्मन्निवपन्तुताः ॥८॥
सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥
तासामीशानोभगवꣳपराचीनामुखाकृधि ॥९॥
असङ्ख्यातासहस्राणियेरुद्द्राऽअधिभूम्म्याम् ॥
तेषाꣳसहस्रयोजनेऽवधन्न्वानितन्मसि ॥१०॥
व्वयꣳसोमव्व्रतेतवमनस्तनूषुबिभ्रतꣳ ॥
प्रजावन्तꣳसचेमहि ॥११॥
एषतेरुद्द्रभागःसहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्द्रभागऽआखुस्तेपशुः ॥१२॥
अवरुद्द्रमदीमह्यवदेवन्त्र्यम्बकम् ॥
यथानोव्वस्यसस्क्करद्द्यथानꣳश्श्रेयसस्क्करद्द्यथानोव्व्यवसाययात् ॥१३॥
भेषजमसिभेषजङ्गवेश्श्वायपुरुषायभेषजम् ॥
सुखम्मेषायमेष्ष्यै ॥१४॥
त्र्यम्बकँय्यजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥
उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥
त्र्यम्बकँय्यजामहेसुगन्धिम्पतिवेदनम् ॥
उर्व्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥१५॥
एतत्तेरुद्द्रावसन्तेनपरोमूजवतोतीहि ॥
अवततधन्न्वापिनाकावसꣳकृत्तिवासाऽअहिꣳसन्नꣳशिवोतीहि ॥१६॥
त्र्यायुषञ्जमदग्नेꣳकश्श्यपस्यत्र्यायुषम् ॥
यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥१७॥
शिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिꣳसीꣳ ॥
निवर्त्तयाम्म्यायुषेन्नाद्द्यायप्प्रजननायरायस्प्पोषायसुप्प्रजास्त्वायसुवीर्य्याय ॥१८॥

॥ इति रुद्रे षष्ठोऽध्यायः ॥

## अथ रुद्रे सप्तमोऽध्यायः

हरिः ॐ उग्ग्रश्च्चभीमश्च्चद्ध्वान्तश्च्चधुनिश्च्च ॥

सासह्वाँश्च्चाभियुग्ग्वाचव्विक्क्षिपःस्वाहा ॥१॥

अग्ग्निᳬहृदयेनाशनिᳬहृदयाग्ग्रेणपशुपतिङ्कृत्स्नहृदयेनभवँय्यक्क्ना ॥

शर्व्वम्मतस्न्नाब्भ्यामीशानम्मन्न्युनामहादेवमन्तᳬपर्शव्व्येनोग्ग्रन्देवंव्वनिष्ठुनाव्वसिष्ठहनुᳬशिङ्गीनि

कोश्श्याब्भ्याम् ॥२॥

उग्ग्रँल्लोहितेनमित्त्रᳬसौव्व्रत्त्येनरुद्द्रन्दौव्व्रत्त्येनेन्द्रम्प्रक्क्रीडेनमरुतोबलेनसाद्ध्यान्प्प्रमुदा ॥

भवस्यकण्ठ्यᳬरुद्द्रस्यान्तᳬपार्श्व्यम्महादेवस्ययकृच्छर्व्वस्यव्वनिष्ठुᳬपशुपतेᳬपुरीतत् ॥३॥

व्वाजश्च्चमेप्प्रसवश्च्चमेप्प्रयतिश्च्चमेप्प्रसितिश्च्चमेधीतिश्च्चमेक्क्रतुश्च्चमेस्वरश्च्चमेश्श्लो

कश्च्चमेश्श्रवश्च्चमेश्श्रुतिश्च्चमेज्ज्योतिश्च्चमेस्वश्च्चमेयज्ञेनकल्प्पन्ताम् ॥४॥

प्प्राणश्च्चमेपानश्च्चमेव्व्यानश्च्चमेसुश्च्चमेचित्तञ्चमऽआधीतञ्चमेव्वाक्क्चमेमनश्च्चमे

चक्क्षुश्च्चमेश्श्रोत्त्रञ्चमेदक्क्षश्च्चमेबलञ्चमेयज्ञेनकल्प्पन्ताम् ॥५॥

इमामेऽअग्ग्नऽइष्ट्टकाधेनव÷सन्त्वेकाचदशचदशचशतञ्चशतञ्चसहस्रञ्चसहस्रञ्चायुतञ्चायुत-

ञ्चनियुतञ्चनियुतञ्चप्प्रयुतञ्चाब्र्बुदञ्चन्न्यर्ब्बुदञ्चसमुद्द्रश्च्चमद्ध्यञ्चान्तश्च्चपरार्द्धश्च्चैता-

मेऽअग्ग्नऽइष्ट्टकाधेनव÷सन्त्वमुत्त्रामुष्मिँम्मल्लोके ॥६॥

व्विश्श्वतश्च्चक्क्षुरुतव्विश्श्वतोमुखोव्विश्श्वतोबाहुरुतव्विश्श्वतस्प्पात् ॥

सम्बाहुब्भ्यान्धमतिसम्पतत्त्रैर्द्द्यावाभूमीजनयन्देवऽएक÷ ॥७॥

इति रुद्रे सप्तमोऽध्यायः ।

## अथ रुद्रे अष्टमोऽध्यायः

हरिः ॐ ऋचंव्वाचम्प्रपद्द्येमनोयजुᳬप्प्रपद्द्ये-सामप्प्राणम्प्रपद्द्येचक्क्षुᳬ श्श्रोत्त्रम्प्रपद्द्ये ॥

व्वागोज÷सहौजोमयिप्प्राणापानौ ॥१॥

यन्मेच्छिद्द्रञ्चक्क्षुषोहृदयस्यमनसोव्वातितृण्णम्बृहस्प्पतिर्म्मेतद्दधातु ॥

शन्नोभवतुभुवनस्ययस्प्पति÷ ॥२॥

भूर्ब्भुवᳬस्व÷तत्त्सवितुर्व्वरेण्ण्यम्भर्ग्गोदेवस्यधीमहि ॥

धियोयोन÷प्प्रचोदयात् ॥३॥

कयानश्चित्रऽआभुवदूतीसदावृधᳪंसखा ॥
कयाशचिष्ठयाव्वृता ॥४॥
कस्त्वासत्योमदानाम्मᳪंहिष्ठोमत्सदन्धसᳪं ॥
दृढाचिदारुजेव्वसु ॥५॥
अभीषुणᳪंसखीनामविताजरितृणाम् ॥
शतम्भवास्यूतिभिः ॥६॥
कयात्त्वन्नऽऊत्याभिप्प्रमन्दसेव्वृषन् ॥
कयास्तोतृब्भ्यऽआभर ॥७॥
इन्द्रोव्विश्श्वस्यराजति ॥
शन्नोऽअस्तुद्विपदेशञ्चतुष्प्पदे ॥८॥
शन्नोमित्रःशंव्वरुणᳪंशन्नोभवत्त्वर्य्यमा ॥
शन्नऽइन्द्रोबृहस्प्पतिᳪंशन्नोव्विष्णुरुरुक्क्रमः ॥९॥
शन्नोव्वातःपवताᳪंशन्नस्तपतुसूर्य्यः॥
शन्नᳪंकनिक्क्रदद्देवःपर्ज्जन्न्योऽअभिवर्षतु ॥१०॥
अहानिशम्भवन्तुनᳪंशᳪंरात्रीᳪंप्प्रतिधीयताम् ॥
शन्नऽइन्द्राग्ग्नीभवतामवोभिᳪंशन्नऽइन्द्रावरुणारातहव्या ॥
शन्नऽइन्द्रापूषणाव्वाजसातौशमिन्द्रासोमासुवितायशँय्योः ॥११॥
शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥
शँय्योरभिस्रवन्तुनᳪं ॥१२॥
स्योनापृथिविनोभवानृक्षरानिवेशनी ॥
यच्छानᳪंशर्म्मसप्प्रथाᳪं ॥१३॥
आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥
महेरणायचक्षसे ॥१४॥
योवःशिवतमोरसस्तस्यभाजयतेहनः ॥
उशतीरिवमातरः ॥१५॥

तस्म्माऽअरङ्गमामवोयस्यक्षयायजिन्व्थ ॥
आपोजनयथाचनः ॥१६॥
द्यौऽशान्तिरन्तरिक्षॐशान्तिःप्पृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः ॥
व्वनस्प्पतयःशान्तिर्व्विश्वेदेवाःशान्तिर्ब्रह्ममशान्तिःसर्व्वॐशान्तिःशान्तिरेवशान्तिः
सामाशान्तिरेधि ॥१७॥
दृतेदृॐहमामित्रस्यमाचक्षुषासर्व्वाणिभूतानिसमीक्षन्ताम् ॥
मित्रस्याहञ्चक्षुषासर्व्वाणिभूतानिसमीक्षे ॥
मित्रस्यचक्षुषासमीक्षामहे ॥१८॥
दृतेदृॐहमाज्योक्क्तेसन्दृशिजीव्यासञ्ज्योक्क्तेसन्दृशिजीव्यासम् ॥१९॥
नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्च्चिषे ॥
अन्याँस्तेऽअस्म्मत्तपन्तुहेतयःपावकोऽअस्म्मब्भ्यॐशिवोभव ॥२०॥
नमस्तेऽअस्तुव्विद्द्युतेनमस्तेस्तनयित्क्नवे ॥
नमस्तेभगवन्नस्तुयतःस्वःसमीहसे ॥२१॥
यतोयतःसमीहसेततोनोऽअभयङ्कुरु ॥
शन्नःकुरुपप्रजाब्भ्योभयन्नःपशुब्भ्यः ॥२२॥
सुमित्रियानऽआपऽओषधयःसन्तुदुर्म्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्म्मः ॥२३॥
तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्क्रमुच्चरत् ॥
पश्श्येमशरदःशतञ्जीवेमशरदःशतॐशृणुयामशरदः
शतम्प्रब्ब्रवामशरदःशतमदीनाःस्यामशरदःशतम्भूयश्च्चशरदःशतात् ॥२४॥

॥ इति रुद्रे अष्टमोऽध्यायः ॥

हरिः ॐ स्वस्तिनऽइन्द्रोव्वृद्धश्श्रवाःस्वस्तिनःपूषाव्विश्श्ववेदाः ॥
स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्प्पतिर्द्दधातु ॥१॥
विश्श्वानिदेवसवितर्द्दुरितानिपरासुव ॥ यद्भद्द्रन्तन्नऽआसुव ॥२॥
नमःशम्भवायचमयोभवायचनमःशङ्करायचमयस्क्करायचनमःशिवायचशिवतरायच ॥३॥
ॐ शान्तिः । ॐ शान्तिः । ॐ शान्तिः ॥

(ङ) सद्योजातादिमन्त्रपाठः

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवे भवेनाति भवे भवस्व मां भवोद्भवाय नमः ॥१॥
वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः
कालाय नमः कलविकरणाय नमो बलविकरणाय नमो
बलाय नमो बलप्रमथनाय नमः
सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥२॥
अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽअस्तु रुद्ररूपेभ्यः ॥३॥
तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥४॥
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ।
ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽअस्तु सदाशिवोम् ॥५॥
शिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिꣳसीः ॥
निवर्त्तयाम्म्यायुषेन्नाद्यायप्प्रजननायरायस्प्पोषायसुप्प्रजास्त्वायसुवीर्य्याय ॥६॥
ॐ हरहरहर महादेव ! महादेव !! महादेव !!! ॐ साम्बसदाशिवाय नमः ॥

(घ) शिवस्य विशेषपूजा

पूर्वोक्तविधिना पुनः सङ्क्षेपेण पञ्चामृतस्नानं विधाय

वस्त्रम् -

ॐ असौ योऽवसर्पति नीलग्रीवो विलोहितः ।
उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्यः सदृष्टो मृडयाति नः ॥
ॐ सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ।
मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥
वस्त्रं समर्पयामि श्रीसाम्बसदाशिवाय नमः ।

यज्ञोपवीतम् -

ॐ नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथोयेऽअस्य सत्वानोऽ हन्तेभ्यो करन्नमः ॥
नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।
उपवीतं चोत्तरीयं गृहाण परमेश्वर ॥ यज्ञोपवीतं सम०।

चन्दनम् -

ॐ प्रमुञ्च धन्वनस्त्वमुभयो रात्न्योर्ज्याम् ।
याश्च ते हस्तऽइषवः पराता भगवो वप ॥
श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥ चन्दनं सम०।

अक्षताः

ॐ अक्षन्नमीमदन्त ह्यवप्प्रियाऽअधूषत ।
अस्तोषत स्वभानवो विप्प्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥
अक्षतांश्च सुरश्रेष्ठ कुंकुमाक्तान् सुशोभनान् ।
मया निवेदितान् भक्त्या गृहाण परमेश्वर । अक्षतान् सम०।

पुष्पाणि

ॐ विज्यन्धनुः कपर्दिनो विशल्यो बाणवाँऽउत
अनेशन्नस्य याऽइषवऽआभुरस्य निषङ्गधिः ॥
माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयाऽनीतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥ पुष्पाणि सम०।

बिल्वपत्राणि

ॐ शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवीऽअभिशोचीर्म्मान्तरिक्षं मा वनस्पतीन् ॥
त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिधायुधम् ।
त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम् ॥ बिल्वपत्रं सम०।

धूपः

ॐ या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।
तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥
वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ धूपं सम०।

दीपः

ॐ परिते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ।
अथोयऽइषुधिस्तवारेऽअस्म्मन्निधेहि तम् ॥
आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश त्रैलोक्यं तिमिरापहम् ॥ दीपं दर्शयामि0।

नैवेद्यम्

ॐ अवतत्य धनुष्ट्वꣳसहस्राक्ष शतेषुधे ।
निशीर्य शल्ल्यानाम्मुखा शिवो नः सुमना भव ॥
शर्कराघृतसंयुक्तं मधुरं स्वादु चोत्तमम् ।
उपहारं समानीतं नैवेद्यं प्रतिगृह्यताम् ॥ नैवेद्यं सम0।

आचमनीयम्

एलोशीरलवङ्गादिकर्पूरादिसुवासितम् ।
प्राशनायाऽऽहृतं तोयं गृहाण परमेश्वर ॥ आचमनीयं सम0।

ताम्बूलम्

ॐ नमस्तऽआयुधायानातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने ॥
पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।
एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ ताम्बूलं सम0।

दक्षिणा

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
सदाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ दक्षिणां सम0।

नीराजनम्

ॐ आ रात्रि पार्थिवꣳरजः पितुरप्रायि धामभिः ।
दिवः सदाꣳसि बृहती वितिष्ठसऽआ त्वेषं वर्तते तमः ॥

ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।
त्वमेव सर्वज्योतींषि तेन नीराजयाम्यहम् ॥ नीराजनं सम०।

कर्पूरारार्तिक्यम्

ॐ इदꣳहविः प्रजननम्मेऽअस्तु दशवीरꣳसर्वगणꣳस्वस्तये ।
आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि ।
अग्निः प्रजां बहुलाम्मे करोत्वन्नम्पयो रेतोऽअस्मासु धत्त ॥
कदलीगर्भसंभूतं घनसारं मनोहरम् ।
आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव ॥ [कर्पूरारार्तिक्यं सम०। साम्बसदाशिवाय नमः]

प्रदक्षिणा

ॐ मानो महान्तमुत मानोऽअर्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् ।
मा नो वधीः पितरम्मोतमातरम्मानः प्रियास्तन्वो रुद्ररीरिषः ॥
यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥ [प्रदक्षिणां सम०। साम्बसदाशिवाय नमः]
इत्युपचारान्समर्प्य ।

पुष्पाण्यादाय बद्धाञ्जलिः प्रार्थयेत् -

ॐ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ।
नानासुगन्धिपुष्पाणि देशकालोद्भवानि च ॥
पुष्पाञ्जलिं मया दत्तं गृहाण परमेश्वर ॥
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि प्रसीद परमेश्वर ॥
विधिच्युतं भक्तिहीनमुपचारविवर्जितम् ।
यत्पूजितोऽसि भगवंस्तेनापीश प्रसीदसि ॥
ग्रहपीडाः प्रशाम्यन्तु भूतबाधा विनश्यतु ।
ज्वरादीनखिलान् रोगान् विनश्यन्तु त्वदीक्षया ॥
शिवशंकर विश्वात्मन् भूतेश्वर दयामय ।

भवत्स्मरणमात्रेण रक्ष नः पक्षवर्जितान् ॥

कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् ।

सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ।

करचरणकृतं वाक्कायजं कर्मजं वा,

श्रवणनयनजं वा मानसं वाऽपराधम् ।

विहितमविहितं वा सर्वमेतत् क्षमस्व

जय जय करुणाब्धे ! श्री महादेव ! शम्भो ! ॥

इति क्षमापयेत् ।

क्षमाप्रार्थनापुरःसरं मन्त्रपुष्पाञ्जलिं समर्पयेत् ।

॥ इति ॥

(ङ) उत्तराङ्गकर्म

(अ) अर्घ्यनिवेदनम्

ॐ रक्ष रक्ष महादेव रक्ष त्रैलोक्यरक्षक ।

भक्तानामभयंकर्ता त्राता भव भवार्णवात् ॥

वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ।

अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ॥

[अर्घ्यं निवेदयामि० साम्बसदाशिवाय नमः ।]

(आ) पूर्णपात्रम्

रौप्यं ताम्रं मृण्मयं ता यत्संभवं पात्रं फलवस्त्रद्रव्यसहितं षट्पञ्चाशदधिकद्विशतमुष्टि (२५६) परिमितं बहुभोक्तृपुरुषाहारपरिमितं वा तण्डुलयुतं पूर्णपात्रमादाय पूर्णादर्वीति पूर्णपात्रं ब्राह्मणं च त्रिः सम्पूज्य -

ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत ।

वस्नेव विक्रीणावहाऽइषमूर्जꣳशतक्रतो ॥

ॐ अद्येहेत्यादि पूर्वसङ्कल्पसिद्धिरस्तु श्रीपरमेश्वरसाम्बसदाशिवप्रीतये कृतस्य दीपगणेश-कलशपूजनपूर्वकं श्रीसाम्बसदाशिवोपरि अविच्छिन्नजलधारया (दुग्धादिधारया वा) (अमुक) सङ्ख्याकब्राह्मणद्वारा कृतस्य (अमुक) रुद्राभिषेककर्मणः ब्राह्मणद्वारा कृतस्य

शप्तशतीपाठकर्मणश्च अपूर्णस्य पूरणार्थम् इदं पूर्णपात्रं प्रजापतिदैवतं यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय पूर्णपात्रत्वेन तुभ्यमहं संप्रददे ।
इति सङ्कल्प्य पूर्णपात्रं ब्राह्मणाय दद्यात् ।

### (इ) दक्षिणासङ्कल्पः

ॐ अद्येह पूर्वसङ्कल्पसिद्धिरस्तु ... ... मम श्रीसाम्बसदाशिवप्रीतिद्वारा सर्वाभ्युदयावाप्तये (अमुक) कामनासिद्धये कृतस्य (अमुक) रुद्राभिषेककर्मणः साङ्गतायै (सप्तशतीपाठकर्मणश्च साङ्गतायै) इमां दक्षिणां ... ... यथानामदैवतां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य यथाकाले दातुमहं जले उत्सृजे ।

**ॐ रोगानशेषानपहंसि तुष्टा**
**रुष्टा तु कामान् सकलानभीष्टान् ।**
**त्वामाश्रितानां न विपन्नराणां**
**त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥**

### (ई) विसर्जनम्

गन्धपुष्पाक्षतादिभिर्देवान् विसर्जयेत् -

**ॐ यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।**
**इष्टकामप्रसिद्धयर्थं पुनरागमनाय च ॥**
**गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ।**
**यत्र ब्रह्मादयो देवास्तत्र गच्छ सुरेश्वर ॥**
**आवाहनं न जानामि न जानामि विसर्जनम् ।**
**मन्त्रपूजां न जानामि क्षमस्व परमेश्वर ॥**

इति कर्मेश्वरार्पणम् - ॐ कायेन वाचा० ॥

### अभिषेकः

**हरिः ॐ द्यौः शान्तिरन्तरिक्ष ँ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व ँ शान्तिः शान्तिरेव शान्तिः सा माशान्तिरेधि ॥**

तच्चक्षुर्देव हितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥

स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः ।

स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्द्दधातु ॥

विश्वानि देवसवितर्दुरितानि परासुव । यद्भद्रं तन्नऽआसुव ॥

॥ इति ॥

आशिषमन्त्रपाठः

गन्धपुष्पप्रसादादिकं हस्तेन गृहीत्वा -

हरिः ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूरऽइषव्योतिव्याधी महारथो जायतान्दोग्ध्रीधेनुर्व्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥

दीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम् ।

अथो त्वन्दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥

पुनस्त्वादित्या रुद्रावसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।

घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥

मनसः काममा कूतिं वाचः सत्यमशीय ।

पशूनाꣳरूपमन्नस्य रसो यशः श्रीः श्रयताम् ॥

इत्याशिषमन्त्रान्पठित्वा यजमानाय प्रसादादिकं दद्यात् -

ॐ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते ।

धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥

ॐ स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु

गोवाजिहस्तिधनधान्यसमृद्धिरस्तु

ऐश्वर्यमस्तु विजयोऽस्तु रिपुक्षयोऽस्तु

सन्तानवृद्धिसहिता हरिभक्तिरस्तु ॥

॥ इति ॥

प्रसादवितरणम्

ततो यजमानहस्ते रक्षासूत्रं बध्नीयात् -

ॐ येन बद्धो बलीराजा दानवेन्द्रो महाबलः ।
तेन त्वामपि बध्नामि रक्षे मा चल मा चल ॥
ॐ त्वं यविष्ठ दाशुषो नॄंः पाहि शृणुधी गिरः ।
रक्षा तोकमुतत्मना ॥

॥ इति रुद्राभिषेकविधिः ॥

## शब्दार्थाः

| | | |
|---|---|---|
| स्वासनम् | = | आफ्नो आसन |
| वरणम् | = | याज्ञिक कार्य गर्ने ब्राह्मण नियुक्त गर्नु |
| पुण्याहवाचनम् | = | चार वा पाँच ब्राह्मणद्वारा "शुभ होस्" भनी यजमानलाई मन्त्र पढेर आशीर्वाद दिनु |
| दीपः | = | कुनै पनि कर्मको साक्षीका रूपमा बालिने बत्ती |
| सर्वौषधिः | = | कूट, बेसार, जटामसी, चुत्रो, मुरा, श्रीखण्ड, शिलाजीत, बोझो, चाँप मोथे मिलाएको औषधीको धुलो |
| पञ्चरत्नानि | = | सुन, हिरा, मूगा, पुँवालो र मोती |
| सप्तमृत्तिका | = | घोडाको टापको, हात्तीको पाइलाको, धमिराको गोलाको, चौबाटाको, दहको पिँधको, राजाको ढोकाको र गाईको गोठको माटोहरू |
| पञ्चपल्लवानि | = | वर, पिपल, आँप, डुम्री र पाखरीका पातहरू |
| वस्त्रयुग्मेन | = | जोडा कपडाले (रातो र सेतो कपडाले) |
| रक्षाबन्धनम् | = | जौ, दुबो, सर्स्यूँ, चन्दन, गोबर र दही मिसाएर पूजा गरी मन्त्रिएको तीन डोरा भएको काँचो धागो |
| कलशस्कन्धप्रदेशे | = | कलशको घाँटीमा |
| प्रधानदेवता | = | मुख्य देवता |
| उत्तराङ्गकर्म | = | प्रधान कर्म सकेपछि गरिने अङ्ग कर्म |

## अभ्यासः

१. अधःप्रदत्तान् प्रश्नान् समुत्तरयत

१. पुण्याहवाचनसङ्कल्पवाक्यं लिखत ।
२. पुण्याहवाचनमन्त्रप्रतीकानि कानि ? सर्वाणि लेख्यानि ।
३. दीपपूजनमन्त्रं लिखत ।
४. गणेशप्रार्थनामन्त्रं पूरयत ।
५. कलशस्कन्धप्रदेशे सम्पूजनीया देवताः काः ?
६. शिवस्य ध्यानमन्त्रः कः ?
७. गणानान्त्वा । सुषारथिः । नमस्ते । त्र्यायुषम् । एषु त्रयो मन्त्राः सस्वरं प्रपूरणीयाः ।
८. पूर्णपात्रपूजनमन्त्रः कः ?
९. प्रसादग्रहणमन्त्रं लिखत ।
१०. पुण्याहवाचने कैः कैराशीर्वचोभिर्यजमानस्य कल्याणकामना क्रियते ?
११. पुण्याहवाचने कति कीदृशान् ब्राह्मणान् वृणुयात् ?
१२. पुण्याहवाचनान्ते ब्राह्मणाः किं कुर्वन्ति ?
१३. दीपपूजनविधिं लिखत ।
१४. दीपप्रार्थनाश्लोकान् यथाग्रन्थं लिखत ।
१५. गणेशपूजनसङ्कल्पवाक्यं लिखत ।
१६. गणेशपूजनेऽर्घ्यसहितं फलादिकमादाय पठनीयान् मन्त्रान् लिखत ।
१७. गणेशपूजने प्रयुक्तानि वस्तूनि कानि ?
१८. गणेशावाहनवाक्यं सम्बोधनपदैर्लेखनीयम् ।
१९. गणेशप्रार्थनाश्लोकान् लिखत ।
२०. कलशस्वरूपं विलिख्य स्थापनदिग्भागः प्रदर्शनीयः ।
२१. कलशे तीर्थजलप्रक्षेपण-पञ्चरत्न-सप्तमृत्तिकाप्रक्षेषणमन्त्रान् लिखत ।
२२. कलशस्कन्धप्रदेशे पूजनीयाः देवाः के ?
२३. रक्षासूत्रे स्थापनीयानि वस्तूनि कानि ?

२४. पोटलिकायां स्थापनीयानि वस्तूति कानि ?

२५. नारायणकवचे पठिताः श्लोकाः के ?

२६. नारायणकवचपठनान्ते पोटलिकाया उपयोगिता का ?

२७. रक्षासूत्रपूजनमन्त्रान् लिखत ।

२८. कलशस्कन्धप्रदेशे के के देवाः पूज्यन्ते ?

२९. शिवस्य पञ्चामृतस्नानविधिं लिखत ।

३०. शिवस्य पञ्चमुखनामानि कानि ?

३१. मधुस्नानमन्त्रः कः ?

## २. अशुद्धीर्निराकुरुत

(क) क्षीरस्नानस्य मन्त्रो घृतं मिमिक्षे अस्ति ।

(ख) दधिस्नानस्य मन्त्र अपा ॐरसम् अस्ति ।

(ग) घृतस्नानस्य मन्त्र आप्यायस्व अस्ति ।

(घ) शर्करास्नानस्य मन्त्रो दधिक्राब्णः अस्ति ।

## ३. शब्दान् पृथक्कुरुत

(क) सर्वौषधिः -

(ख) साम्बसदाशिवः -

(ग) याऽओषधीरिति -

(घ) स्पृशन्नारायणकवचम् -

(ङ) अधोलिखितम् -

(च) शुद्धोदकम् -

(छ) कर्पूरारार्तिक्यम् -

### रुद्रीपूजाका लागि आवश्यक सामग्री

**पूजाको सामग्री -** तामाको घल्चा, चोखो जल, जौ, तिल, चन्दन, अबिर, केसरी, सिन्दूर, अक्षता, कुमकुम, फूलमाला, बेलपत्र, तुलसीपत्र, धूप, दीप, नैवेद्य, वस्त्र, जनै, सुपारी, पान, भेटी, नरिवल, पञ्चमेवा (खाने मसला) कपूर, पञ्चामृत (छुट्टाछुट्टै), अष्टसुगन्ध, कुश, पञ्चपल्लव, दुबो, काँचो धागो आदि ।

पूजाको भाँडा, गणेशपूजाको सरजाम, रक्षाबन्धनको सरजाम, रेखी हाल्ने पिठो, धान, चामल, बाटा, जलहरी, त्रिकुटी, थाली, कलश, देवता, पूर्णपात्र, गोदान, भेटी, ब्राह्मणवरणको सामान, पार्वतीलाई सौभाग्यको सामान, ब्राह्मणभोजन, दक्षिणा, शिवलिङ्ग, बृहज्जलाधारपात्र आदि ।

## कक्षा ६ को कक्षागत गीत

*पुर्खाको सृष्टि गौरव स्वाधीन हाम्रो विशाल*
*हिमाल पहाड तराई मधेस अखण्ड हाम्रो नेपाल*
*स्वतन्त्र हाम्रो नेपाल अखण्ड हाम्रो नेपाल – २*

*ध्वजा छ उच्च राष्ट्रको सान र शान्तिको निशान*
*यो सार्वभौम गौरवशाली धरती हाम्रो महान्*
*चेतना खुल्छ बोलीमा हाम्रो शिरमा सहिद*
*करोडौँ हात उठाऔँ साथ उठ्दछ हाम्रो नेपाल*
*स्वतन्त्र हाम्रो ............ – २*

*जाति र भाषा, धर्म संस्कृति नेपाली प्यारो पहिचान*
*सम्पदा लाखौँ सिर्जना बोल्ने माटाका हामी सन्तान*
*यो कर्मभूमि पसिना सिप माग्दछ मेरै नेपाल*
*एकता हाम्रो साझा ढुकढुकी मुटु हो नेपाल*
*स्वतन्त्र हाम्रो ............ – २*

*रचनाकार : जीवनाथ धमला*
*सङ्गीतकार : प्रदीप लामा बम्जन*




नेपालसर्वकारः
शिक्षाविज्ञानप्रविधिमन्त्रालयः
पाठ्यक्रमविकासकेन्द्रम्
सानोठिमीभक्तपुरः